अथ कथमवगम्यते—नायमुन्मत्तबालवाक्यसदृश इति ? तथा हि पश्यामः,—वनस्पतयः सत्रमासत, सर्पाः सत्रमासत इति, यथा, जरद्गवो गायति मत्तकानि, कथं नाम जरद्गवो गायेत् ? कथं वा वनस्पतयः सर्पा वा सत्रमासीरन्निति। उच्यते,—विनियुक्तं हि दृश्यते, परस्परेण सम्बन्धार्थम्। कथं ? ज्योतिष्टोमः—इत्यभिधाय कर्त्तव्यः—इत्युच्यते। केन ?—इत्याकाङ्क्षिते सोमेन इति। किमर्थं ?—इति, स्वर्गाय इति। कथमिति ? इत्यं, अनया इति कर्त्तव्यतया इति। एवमवगच्छन्तः, पदार्थैरेभिः संस्कृतं पिण्डितं वाक्यार्थं कथमुन्मत्तबालवाक्यसदृशम्—इति वक्ष्यामः ?

ननु अनुपपन्नमिदं दृश्यते,—वनस्पतयः सत्रमासत इत्येवमादि। नानुपपन्नम्।—न, अनेन अग्निहोत्रं जुहुयात् स्वर्गकामः—इत्येवमादयोऽनुपपन्नाः स्युः। अपि च वनस्पतयः सत्रमासत:—इत्येवमादयोऽपि नानुपपन्नाः, स्तुतयो ह्येताः सत्रस्य, वनस्पतयो नामाऽचेतना इदं सत्रमुपासितवन्तः, किं पुनर्विद्वांसो ब्राह्मणाः। तद्यथा लोके, सन्ध्यायां मृगा अपि न चरन्ति, किं पुनर्विद्वांसो ब्राह्मणा इति। अपि च अविगीतः सुहृदुपदेशः सुप्रतिष्ठितः कथमिवाशङ्क्येत—उन्मत्तबालवाक्यसदृशः—इति ?। तस्माच्चोदनालक्षणोऽर्थो धर्म इति सिद्धम्।

इति श्रीमच्छबरस्वामिनः कृतौ मीमांसाभाष्ये प्रथमस्य अध्यायस्य प्रथमः पादः॥ तर्कपादोऽयम्॥

———

## प्रथमाध्यायस्य द्वितीयः पादः ।

अर्थवादस्य प्रामाण्याधिकरणम् ।

---

### आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥ १ ॥ (पू० १)

सोऽरोदीत्, यदरोदीत्, तद्रुद्रस्य रुद्रत्वं (१) प्रजापतिः आत्मनो वपामुदखिदत्, (२) देवा वै देवयजनमध्यवसाय दिशो न प्रजानन्—(३) इत्येवमादीनि समाम्नातारः समामनन्ति वाक्यानि। तानि किं कञ्चित् धर्मं प्रमिमते उत न? इति भवति विचारणा। तदभिधीयते, क्रिया कथमनुष्ठेया? तां वदितुं समाम्नातारो वाक्यानि समामनन्ति। तत्, यानि वाक्यानि क्रियां नावगमयन्ति, क्रियासम्बद्धं वा किञ्चित्। एवमेव भूतमर्थमन्वाचक्षते रुदितवान् रुद्रः, (१) वपामुच्चिखेद प्रजापतिः, (२) देवा वै दिशो न प्रजज्ञिरे (३)—इत्येवं जातीयकानि, तानि कं धर्मं प्रमिमीरन्? अथोच्येत, अध्याहारेण वा विपरिणामेन वा व्यवहितकल्पनया वा व्यवधारणकल्पनया वा गुणकल्पनया वा कश्चिदर्थः कल्पयिष्यते—इति। स कल्प्यमानः कः कल्प्येत? रुद्रः किल रुरोद, अतोऽन्येनापि रोदितव्यम्, (१) उच्चिखेद आत्मवपां प्रजापतिः, अतोऽन्योऽप्युत्खिदेदात्मनो वपाम्, (२) देवा वै देवयजनकाले दिशो न प्रज्ञातवन्तः, अतोऽन्योऽपि दिशो न

प्रजानीयात् (३)—इति, तच्चाशक्यं,—इष्टवियोगेनाभिघातेन वा यत् वाष्पनिर्मोचनं, तत् रोदनमित्युच्यते, न च, तत् इच्छातो भवति। (१)। न च, कश्चिदात्मनो वपामुत्खिद्य तामग्नौ प्रहृत्य तत उत्थितेन तूपरेण पशुना यष्टुं शक्नुयात्। (२)। न च, देवयजनाध्यवसानकाले केचित् दिशो मुह्येयुः। (३)। अतः एषामानर्थक्यम्। तस्मादेवं जातीयकानि वाक्यानि अनित्यानि—इत्युच्यन्ते, यद्यपि च नित्यानि, तथापि न नित्यमर्थं कुर्वन्ति इति। स एव वाक्यैकदेशस्याक्षेपः, न कृत्स्नस्य वाक्यस्य। ननु एकदेशाद्विना साकाङ्क्षः पदसमूहो न पर्य्याप्तः स्वस्मै प्रयोजनाय, अतः आक्षिप्त एव इति। नैवं, भवति हि कश्चित् पदसमूहः,योऽर्थवादेभ्यो विनाऽपि विदधाति कञ्चिदर्थं, यानि पुनः तैः सह संयुज्य अर्थान्तरे वर्त्तन्ते, तान्येकदेशाक्षेपिणाक्षिप्यन्ते।

## शास्त्रदृष्ट-विरोधाच्च ॥ २ ॥ (पू०२)

स्तेनं मनः ( २ ) अनृतवादिनी वाक् ( २ )—इत्येवंजातीयकानां धर्म्मं प्रति अप्रामाण्यं, भूतानुवादात्। विपरिणामादिभिरपि कल्प्यमाने स्तेयं मृषोद्यञ्च कर्त्तव्यमित्यापतति, तच्चाशक्यं स्तेयानृतवादप्रतिषेधमबाधमानेनानुष्ठातुम्। न च विकल्पः, वैषम्यात्, एकः कल्प्यो विधिः, एकः प्रत्यक्षः।

अथ दृष्टविरोधः,—तस्मात् धूम एवाग्नेर्दिवा ददृशे नार्चिः। तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः इति अस्मा-

लोकादुत्क्रम्याग्निरादित्यं गतः, रात्रौ आदित्यस्तम् इत्ये-
तदुपपादयितुमिदम्, उभयमपि दृष्टविरुद्धमुच्यते। तस्मा-
न्नैषाऽवधारणा सिध्यति इति (१)। अपरो दृष्टविरोधः,—
नचैतद्विद्मो वयं ब्राह्मणा वा स्मः, अब्राह्मणा वा इति अ-
क्रियार्थत्वादनर्थकम्। अथायमर्थः—नैवैतत् ज्ञायते किं वा
ब्राह्मणा वयम् उताब्राह्मणा एवेति, प्रत्यक्षविरुद्धमप्रमा-
णम् (२)। अपरः शास्त्रदृष्टेन विरोधः—को हि तद्वेद, यत्
अमुष्मिन् लोकेऽस्ति वा, न वा इति, यदि प्रश्नोऽयं, अ-
क्रियार्थत्वादनर्थकः। अथानवकॢप्तिः, शास्त्रदृष्टेन विरोधः।
अतः प्रत्यक्षविरुद्धमप्रमाणम् (३)।

## तथाफलाभावात् ॥ ३ ॥ (पू० ३)

गर्गत्रिरात्रब्राह्मणं प्रकृत्योच्यते शोभतेऽस्य मुखं य एवं
वेद—इति यदि भूतानुवादः, अनर्थकः। अथाध्ययनफलानु-
वादः, ततोऽसदनुवादः। कालान्तरे फलं भविष्यतीति
चेत्। न हि अत्र प्रमाणमस्ति। विधिः स्यादिति चेत्।
नैव विधिपरः। द्रव्यसंस्कारकर्म्मसु (३ अ० २ पा०)
इति चिन्तयिष्यति एतदुपरिष्टात्—किं फलविधिरुतार्थ-
वादः—इति। इह तु किं भूतानुवादः, क्रियार्थो वा?
इति। आऽस्य प्रजायां वाजी जायते य एवं वेद इति
चोदाहरणम्।

## अन्यानर्थक्यात् ॥ ४ ॥ (पू० ४)

पूर्णाहुत्या सर्वान् कामानवाप्नोति (१), पशुबन्धयाजी

सर्वान् लोकानभिजयति (२), तरति मृत्युं, तरति ब्रह्म-हत्यां योऽश्वमेधेन यजते, य उ चैनमेवं वेद (३) इति, यदि भूतानुवादमात्रमनर्थकम्। अथ फलविधिः, इतरेषां आनर्थक्यम्,—न हि, अहुत्वा पूर्णाहुतिं, अग्निहोत्रादयः क्रियन्ते। न च, अनिष्ट्वा अग्निषोमीयेन, सोमेन यजन्ते। न च, अनधीत्य, अश्वमेधेन यजन्ते। तद्यथा, पथिजाते अर्के मधु उत्सृज्य, तेनैव पथा मध्वर्थिनः पर्वतं न गच्छेयुः, तादृशं हि तत्। अपि चाहुः—अर्के चेन्मधु विन्देत, किमर्थं पर्वतं व्रजेत् ?। इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् इति।

## अभागि-प्रतिषेधाच्च ॥ ५ ॥ (पू० ५)

न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि इत्य-प्रतिषेधभागिनमर्थं प्रतिषेधन्ति। विज्ञायते एवैतत्, अन्तरिक्षे, दिवि चाग्निर्न चीयते इति। पृथिवीचयनप्रतिषेधार्थं च यद्वाक्यं, भवेत् चयनप्रतिषेधार्थमेव तत्। अप्रामाणं, नैष विरोधो भवति। कथं तत् प्रमाणम् ?, व्रतविध्यन्तरमाकुलयेत्,स्वयं चाकुलं स्यात्, न चेतव्यं, हिरण्यं निधाय चेतव्यमिति।

## अनित्यसंयोगात् ॥ ६ ॥ (पू० ६)

अनित्यसंयोगश्च वेदप्रामाण्ये सति परन्तु श्रुतिसामान्यमात्रम् (१ अ० १ पा० ३१ सू०) इति परिहृतः। इदानीं वेदैकदेशानामाक्षिप्तानां पुनरुपोद्बलक उत्तिष्ठति, —बबरः प्रावाहणिरकामयत—इति।

विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः ॥ ७ ॥ (सि०)

इदं समाम्नायते, वायव्यं श्वेतमालभेत भूतिकामः, वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयति—इति। वायुर्वै क्षेपिष्ठा देवता—इत्यतो यद्यपि क्रिया नाऽवगम्यते, क्रियासंबद्धं वा किञ्चित्। तथापि विध्युद्देशेनैकवाक्यत्वात् प्रमाणम्। भूतिकामः—इत्येवमन्तो विध्युद्देशः, तेनैकवाक्यभूतो वायुर्वै क्षेपिष्ठा देवता—इत्येवमादिः। कथमेकवाक्यभावः?। पदानां साकाङ्क्षत्वाद्विधिः स्तुत्यैकवाक्यत्वं भवति,—भूतिकाम आलभेत, कस्मात्? यतो वायुः क्षेपिष्ठेति। नायमभिसम्बन्धो विवक्षितः,—भूतिकामेनालब्धव्यमिति। कथं तर्हि आलभेत? यतः, ततो भूतिः इति, भिन्नाविमावर्थौ, उभयाभिधाने वाक्यं भिद्येत।

किमर्था स्तुतिरिति चेत्। कथं रोचेत? नोऽनुष्ठीयेत इति। ननु प्राक् स्तुतिवचनात्, अनुष्ठानं भूतिकामात्वात्सिद्धं, स्तुतिवचनमनर्थकम्। न हि, यदा स्तुतिपदाऽसन्निधानं, तदा पूर्वेणैव विधिः। यदा स्तुतिपदसम्बन्धः, न तदा भूतिकामस्यालम्भो विधीयते। यथा, पटो भवति इति, पट उत्पद्यते इत्यर्थः, निराकाङ्क्षं पदद्वयम्। यदा च तस्मिन्नेव रक्तः—इत्यपरं श्रूयते, तदा रागसम्बन्धो भवतीत्यर्थः, भवति च रक्तं प्रत्याकाङ्क्षा। एवं यदा न स्तुतिपदानि, विधिशब्देनैव तदा प्ररोचना, यदा स्तुतिवचनं, तदा स्तवनेन। ननु एवं सति, किं स्तुतिवचनेन?

यस्मिन् सति अविधायकं, मा भूत् तत्, तदभावेऽपि पूर्व-विधिनैव प्ररोचयिष्यते इति। सत्यं विनाऽपि तेन, सिद्ध्येत् प्ररोचनम्। अस्ति तु तत्, तस्मिन् विद्यमाने योऽर्थो वाक्यस्य, सोऽवगम्यते स्तुतिप्रयोजनं, तयोस्तस्मिन् अविद्यमाने विधिना प्ररोचनमिति।

ननु सत्स्वपि स्तुतिपदेषु पूर्वस्य विधिस्वरूपत्वाद्विधि-रभिप्रेतः स्यात्, न विवक्ष्येत स्तुतिपदसम्बन्धः। आह। स्तुतिपदानि त्वनर्थकान्यभविष्यन् साकाङ्क्षाणि। भवन्त्वन-र्थकानि इति चेत्। न, गम्यमानेऽर्थे अविवक्षितार्थानि भवितुमर्हन्ति। योऽसौ विध्युद्देशः, स शक्नोति निर-पेक्षोऽर्थं विधातुं, शक्नोति च स्तुतिपदानां वाक्यशेषो भवितुं, प्रत्यक्षश्च वाक्यशेषभावः। अतोऽस्माद्विधेः स्तुति-मवगच्छामः।

ननु निरपेक्षादपि विधिमवगमिष्यामः। भवतु एवं, नैवं सति कश्चिद्विरोधः। किन्तु अशक्यः स्तुतिपदसम्बन्धे सति विध्यर्थो विवक्षितुम्। वाक्यं हि सम्बन्धस्य विधा-यकं, द्वौ चेत् सम्बन्धौ विदध्यात्,—भूतिकाम आलभेत,(१) आलम्भेन च एष गुणो भविष्यति (२) इति। भिद्येत तर्ह्येवं सति वाक्यम्। अथ यदुक्तं ( ४३। ११ ) न क्रिया गम्यते, न तत्सम्बन्धं वा किञ्चित्—इति। स्तुत्यर्थेन विधीनां स्युः, स्तुतिशब्दाः स्तुवन्तः क्रियां प्ररोचयमानाः अनुष्ठा-तृणामुपकरिष्यन्ति क्रियायाः। एवमिमानि सर्वाण्येव पदानि कञ्चिदर्थं स्तुवन्ति विदधति। अतः प्रमाणं एवं-जातीयकानि वायुर्वै क्षेपिष्ठा देवता—इति।

तुल्यं च साम्प्रदायिकम् ॥ ८ ॥ (उ० १)

अथोच्येत,—प्राक् स्तुतिपदेभ्यः, निराकाङ्क्षाणि विधायकानि, विधिस्वरूपत्वात्, स्तुतिपदानि तु प्रमादपाठः इति । तत् न एवम्, अर्थावगमात्, तुल्यञ्च साम्प्रदायिकं, सम्प्रदायः प्रयोजनं येषां धर्म्माणां, सर्वे ते विधिपदानां अर्थवादपदानां च तुल्याः । अध्यायानध्यायते, गुरुमुखात्प्रतिपत्तिः, शिष्योपाध्यायता च सर्वस्मिन्नेवंजातीयके अविप्लार्थे तुल्यमाद्रियन्ते, स्मरणं च दृढम् । अतो न प्रमादपाठः इति ।

अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥९॥ (उ० २)

अपि च, या एषा अनुपपत्तिरुक्ता (४४।१५) शास्त्रदृष्टविरोधात् इत्येवमाद्या सा सोऽरोदीत् इत्येवमादिषु न प्राप्नोति । कुतः ? । प्रयोगे हि स्तेयादीनामुच्यमाने विरोधः स्यात्, शब्दार्थस्तु अप्रयोगभूतः, तस्मादुपपद्येत स्तेनं मनः, अनृतवादिनी वाक् इति ।

गुणवादस्तु ॥ १० ॥ (उ०३)

यदुक्तं ( ४७।१५ ) विधेयस्य प्ररोचनार्था स्तुतिः इति । तदिह कथमवकल्प्येत ?, यत्रान्यद्विधेयम्, अन्यच्च स्तूयते, यथा, वेतसशाखयाऽवकाभिश्चाग्निं विकर्षति इति वेतसावके विधीयेते, आपश्च स्तूयन्ते, आपो वै शान्ताः इति । तदुच्यते, गुणवादस्तु, गौण एष वादो भवति, यत्

सम्बन्धिनि स्तोतव्ये सम्बन्ध्यन्तरं स्तूयते। अभिजनो ह्येष वेतसावकयोः, ततस्ते जाते। अभिजनसंस्तवेन चाभिजातः स्तुतो भवति। यथा, अस्माकाभिजनो देवदत्तोऽस्माकेषु स्तूयमानेषु स्तुतमात्मानं मन्यते, एवमत्रापि द्रष्टव्यम्। (१व्या०)।

अथ सोऽरोदीत् कस्य विधेः शेषः?। तस्माद्वर्हिषि रजतं न देयम्, इत्यस्य। कुतः?। साकाङ्क्षत्वात्पदानां, सोऽरोदीत्, यदरोदीत्, तत्, रुद्रस्य रुद्रत्वमित्यत्र सः— इति प्रकृतापेक्षः, तत्प्रत्ययात्। तस्य यदश्रु अशीर्य्यत इति तस्य इति पूर्वप्रकृतापेक्ष एव। उपपत्तिर्योपरितनस्य, यो वर्हिषि रजतं दद्यात्, पुराऽस्य संवत्सरात्, गृहे रोदनं भवतीत्यस्य हेतुत्वेनायं प्रतिनिर्दिश्यते, तस्माद्वर्हिषि रजतं न देयम् इति। एवं सर्वाणि साकाङ्क्षाणि' कथं विधेरुपकुर्वन्तीति?। गुणवादेन, रोदनप्रभवं रजतं वर्हिषि ददतो रोदनमापद्यते। तत् प्रतिषेधस्य गुणः। यत् अरोदनमिति। कथं पुनररुदति अरोदीत् इति भवति? (१)। कथं वा अनश्रुप्रभवे रजतेऽश्रुप्रभवमिति वचनम्? (२)। पुराऽस्य संवत्सरादसति रोदने, कथं रोदनं भवतीति? (३)। तदुच्यते, गुणवादस्तु, गौणा एते शब्दाः, रुद्रः इति रोदननिमित्तस्य शब्दस्य दर्शनात् यदरोदीत् इत्युच्यते (१)। वर्णसारूप्यात् निन्दन् अनश्रुप्रभवमप्यश्रुप्रभवमित्याह (२)। निन्दन्नेव च धनत्यागे दुःखदर्शनात् पुराऽस्य संवत्सरात् गृहे रोदनं भवतीत्याह (३)। (२ व्या०)।

तथा, यः प्रजाकामः पशुकामो वा स्यात्, स एतं

प्राजापत्यं तूपरमालभेत इति, आकाङ्क्षितत्वादस्य विधेः शेषोऽयं, स आत्मनो वपामुदक्खिदत् इति कथं गुणवादः ?। इत्थं नाम न आसन् पशवः, यत्, आत्मनो वपामुदक्खिदद्दिति। एतच्च कर्म्मणः सामर्थ्यं, यत्, अग्नौ प्रहृतमात्रायां वपायामजस्तूपर उदगात्, इत्थं बहवः पशवो भवन्तीति। कथं पुनरनुत्खिन्नायां वपायां प्रजापतिरात्मनो वपामुदक्खिदत् इत्याह ?। उच्यते, असद्वृत्तान्तान्वाख्यानं, स्तुत्यर्थेन प्रशंसाया गम्यमानत्वात्। वृत्तान्वाख्याने वर्त्तमाने, इदं निष्पद्यते, यच्च वृत्तान्तज्ञानं, (१) यच्च कस्मिंश्चित् प्ररोचना, द्वेषो वा (२)। तत्र वृत्तान्तान्वाख्यानं न प्रवर्त्तकं, न निवर्त्तकं च इति प्रयोजनाभावात् अनर्थकम् इति अविवक्षितम्। प्ररोचनया तु प्रवर्त्तते, द्वेषात् निवर्त्तते इति तयोर्विवक्षा। वृत्तान्तान्वाख्यानेऽपि विधीयमाने आदिमत्ता दोषो वेदस्य प्रसज्येत। कथं पुनरिदं निरालम्बनमन्वाख्यायते ? इति। उच्यते, नित्यः कश्चिदर्थः प्रजापतिः स्यात्, वायुः (१) आकाशः (२) आदित्यो वा (३)। स आत्मनो वपामुदक्खिदत् इति वृष्टिं (१) वायुं (२) रश्मिं वा (३)। तामग्नौ प्रागृह्णात्, वैद्युते (१) आर्चीषे (२) लौकिके वा (३)। ततोऽजदृत्यन्नं, (१) बीजं, (२) विरुत् (३) वा तमालभ्य तमुपयुज्य प्रजाः पशून् प्राप्नोतीति गौणाः शब्दाः। ( ३ व्या० )।

आदित्यः प्रायणीयश्चरुरादित्य उदयनीयश्चरुः इत्यस्य विधेः शेषो देवा वै देवयजनमध्यवसाय दिशो न प्रजानन् इति, आकाङ्क्षितत्वात्। सर्वव्यामोहानामादित्यश्चरुर्नाश-

यिता, अपि द्विर्मोहस्येति स्तुतिः। कथमसति द्विर्मोहे द्विर्मोहशब्दः इति। उच्यते, अप्राकृतस्य बहोः कर्मसमूहस्योपस्थितत्वात् गौणो मोहशब्दोऽवधारणावकाशदानादिभिर्ज्ञापयतीति गौणता (४व्या०)।

रूपात्प्रायात् ॥ ११ ॥ (उ०४)

हिरण्यं हस्ते भवति, अथ गृह्णाति इति, साकाङ्क्षत्वादस्य विधेः शेषः स्तेनं मनोऽनृतवादिनी वाक् इति। निन्दावचनं हिरण्यस्तुत्यर्थेन, यथा, किं ऋषिणा, देवदत्त एव भोजयितव्यः। कथं पुनरस्तेनं मनः निन्दितुमपि स्तेनशब्देनोच्यते, वाचं चाननृतवादिनीम् अपि अनृतवादिनीं इति ब्रूयात्?। गुणवादस्तु रूपात्, यथा, स्तेनाः प्रच्छन्नरूपाः, एवं च मनः इति गौणः शब्दः। प्रायात् च अनृतवादिनी वागिति।

दूरभूयस्त्वात् ॥ १२ ॥ (उ०५)

दृष्टविरोधे उदाहरणं (४४।२२) तस्माद्धूम एवाग्नेर्दिवा ददृशे, नार्चिः, तस्मादर्चिरेवाग्नेर्नक्तं ददृशे, न धूमः इति, अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा इति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा इति प्रातः, इति मिश्रलिङ्गमन्त्रयोर्विधानस्याकाङ्क्षितत्वाच्छेषः। उभयोर्दैवतयोः सन्निधाने होमः इति स्तुतेरुपपत्तिः। दूरभूयस्त्वात्, धूमस्याग्नेश्चादर्शने गौणः शब्दः।

अपराधात् कर्त्तुश्च पुत्रदर्शनम् ॥१३॥ (उ०६

दृष्टविरोधे एव उदाहरणं (४५।४) न चैतद्विद्मः इति,

तत्, प्रवरे प्रव्रियमाणे देवाः पितर इति ब्रूयात् इत्याकाङ्क्षितत्वादस्य विधेः शेषः । अब्राह्मणोऽपि ब्राह्मणः प्रवरानुमन्त्रणेन स्यादिति स्तुतिः । दुर्ज्ञानत्वादज्ञानवचनं गौणं, स्वापराधेन कर्त्तुश्च पुनर्दर्शनेन, अप्रमत्ता रक्षत तन्तुमेनम् इत्यादिना दुर्ज्ञानम् ।

## आकालिकेप्सा ॥ १४ ॥ (उ०७)

शास्त्रदृष्टविरोधे उदाहरणं (४५।७) को हि तद्वेद इति, दिक्षतौ काशान् करोति इति साकाङ्क्षत्वादस्य विधेः शेषः । प्रत्यक्षफलत्वेन स्तुतिः । अनवक्लृप्तिवचनं विप्रकृष्टकालफलत्वाद्गौणम् ।

## विद्याप्रशंसा ॥ १५ ॥ (उ०८)

तथाफलाभावात् ( २ पा० ३ सू० इत्यत्र उदाहृतं शोभतेऽस्य मुखम् इति गर्गत्रिरात्रविधेराकाङ्क्षितत्वाच्छेषः । वेदानुमन्त्रणस्य च आऽस्य प्रजायां वाजी जायते इति शेषः । मुखशोभा वाजिमत्त्वं च गुणवचनत्वाद् गौणः शब्दः, शोभते इव शिष्यैरवेक्ष्यमाणम् । कुले सन्तताध्ययनश्रवणान्मेधावी जायते इति स प्रतिग्रहादस्य प्राप्नोति इति ।

## सर्वत्वमाधिकारिकम् ॥ १६ ॥ (उ०९)

अन्यानर्थक्यवाक्ये उदाहरणं, पूर्णाहुत्या सर्वान् कामानवाप्नोति इति, पूर्णाहुतिं जुहोति इत्याकाङ्क्षितत्वादस्य विधेः शेषः । य उ चैनमेवं वेद इति, तरति मृत्युम् इत्यस्याकाङ्क्षितत्वाच्छेषः । फलवचनं स्तुतिः, सर्वकाम-

फलस्य निमित्ते सर्वकामावाप्तिवचनं गौणम्। असर्वेषु सर्व-वचनम् अधिकृतापेक्षम्।

**फलस्य कर्मनिष्पत्तिस्तेषां लोकवत्परिमाणत: फलविशेष: स्यात् ॥ १७ ॥ (उ० १०)**

अन्वाहार्य्य वचनमिदं (५।३।२०) यद्यपि विधि:, तथापि अर्थवत्ता परिमाणत: सारतो वा फलविशेषात्।

**अन्त्ययोर्यथोक्तम् ॥ १८ ॥ (उ० ११)**

अभागिप्रतिषेधात् इत्यादावुदाहृतं न पृथिव्यामग्नि-श्चेतव्यो नान्तरिक्षे न दिवि इति, हिरण्यं निधाय चेतव्यम् इत्याकाङ्क्षितत्वात् अस्य विधे: शेष:। पृथिव्यादीनां निन्दा हिरण्यस्तुत्यर्था। असति प्रसङ्गे प्रतिषेधो नित्यानु-वाद:। यच्च (६पू०) अनित्यदर्शनं बबर: प्रावाहणिरका-मयत इति, तत् परिहृतम्, अर्थवादाक्षेपेण पुनरुत्थितम्, इदानीमर्थवादप्रामाण्ये तेनैव परिहरिष्यते इति।

( इति अर्थवादाधिकरणं, १ अ० । २ पा० । १ अधि० )

अथ विधिवन्निगदाधिकरणम्।

**विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥ पू०)**

इह ये विधिवत् निगदा अर्थवादा:, ते उदाहरणं, औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोति ऊर्जोऽवरुध्यै इति। किमस्य विधि: कार्य्यम् उतास्यापि स्तुतिरिति ? किं तावत् प्राप्तं विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम्। विधिवन्निगदेष्वेवंजातीय-केषु फलविधि: स्यात्, फलं ह्यवगम्यते, तथा हि अपूर्वम्

अर्थं विधास्यति, इतरथा स्तुतिवादमात्रम् अनर्थकं स्यात्, स्तुतस्य अस्तुतस्य तावानेव सोऽर्थः। अपि च ऊर्जोऽवरुध्यै इति प्रयोजनं श्रूयते। न च, प्रशस्तोऽयमर्थः इति कश्चिच्छब्दोऽस्ति। लक्षणया तु स्तुतिर्गम्यते, श्रुतिश्च लक्षणायाः ज्यायसीति।

## लोकवदिति चेत् ॥ २० ॥ (पूर्वपक्षे आशङ्का)

इति चेत् पश्यसि, स्तुतिरनर्थिका, न च शब्देनावगम्यते इति। लौकिकानि वाक्यानि भवन्तो विदांकुर्वन्तु। तत् यथा, इयं गौः क्रेतव्या देवदत्तीया, एषा हि बहुक्षीरा स्थपत्या अनष्टप्रजा च इति। क्रेतव्या—इत्यप्युक्ते गुणाभिधानात् प्रवर्त्तन्तेतरां क्रेतारः बहुक्षीरेति च गुणाभिधानमवगम्यते। तद्वत् वेदेऽपि भविष्यति।

## न पूर्वत्वात् ॥ २१ ॥ (आशङ्का निरासः ॥)

नैतदेवं, लोके विदितपूर्वा अर्था उच्यन्ते बहुक्षीरादयः, तेषां विज्ञानमेव न प्रयोजनम्, अतः प्रशंसा गम्यते। अविदितवादे न श्रद्दधीरन्। पूर्ववचनादिव। विदितत्वादेव च प्ररोचयन्ते। वैदिकेषु पुनर्यदि विधिशब्देन न प्ररोचयन्ते, न तरामर्थवादेन। जाताशङ्को हि विधिशब्दे स तदानीम्। अथ विधिशब्देन प्ररोचितः, किं अर्थवादशब्देन? अपि च वेदे व्यक्तमसंवादः, ऊर्जोऽवरुद्ध्यै इति अप्रसिद्धं वचनम्, ऊर्ग्वा उदुम्बरः इति हेतुत्वं चाप्रसिद्धं, यस्मात् ऊर्गुदुम्बरः, तस्मात् तन्मयो यूपः कर्तव्य इति। ऊर्गुदुम्बरः इति अनृतवचनात् अन्यदप्यानृतम् इति परिकल्पयेत।

**उक्तन्तु वाक्यशेषत्वम् ॥ २२ ॥ (सि०)**

उक्तम् ( ४७।१ ) अस्माभिर्वाक्यशेषत्वं, विधिना त्वेकवाक्यत्वात् इति। ननूक्तं (५५।२) फलवचनम् इह गम्यते, न स्तुतिः इति। यत् इह फलवचनं तत् औदुम्बरस्य यूपस्य, न च, अविहित औदुम्बरी यूपोऽस्ति। तत्र फलवचनमेवानर्थकम्। स्तुतिवचनः शब्दो नास्ति इति चेत्। इह फलवचने फलवत्ता प्रतीयते, फलवांश्च प्रशस्त इति, तत्र फलवत्तायामानर्थक्यमिति यो द्वितीयोऽर्थः, प्रशंसा नाम स गम्यते। लक्षणेति चेत्। न लक्षणायामपि अर्थवत्ता भवत्येव लक्षणापि हि लौकिकी। ननूक्तम् (५५।२०) असंवादो वेदे, न ह्यूर्गुदुम्बर इति। गुणवादेन प्ररोचनार्थतां ब्रूमहे, गौणत्वात् संवादः। किम्?। सादृश्यं, यथाऽन्नं प्रीतेः साधनम्, एवमिदपि प्रीतिसाधनशक्तियुक्तं प्रशंसितुं प्रशंसावाचिना शब्देन उच्यते, शक्यते हि तत् पक्वफलसम्बन्धादूर्गिति वक्तुम्।

**विधिस्त्वनर्थकः क्वचित्, तस्मात् स्तुतिः प्रतीयेत, तत्सामान्यादितरेषु तथात्वम् ॥२३॥ सि० युक्तिः १॥**

अप्सुयोनिर्वा अश्वो अप्सुजो वेतसः इति, अप्सुयोनिरश्वः कर्त्तव्यः इति विधेरशक्यत्वादानर्थक्यं, तत्रावश्यं स्तुतिः कल्पयितव्या, शमयित्रीभिरद्भिरश्वस्य अवकानां च सम्बन्धो यजमानस्य कष्टं शमयतीति। तत्सामान्यादितरेषु तथात्वं, तथेति यावत्, तावत् तथात्वमिति। किं तत् सामान्यम्?। विध्यसम्भवः स्तुतिसम्भवश्च।

## प्रकरणे सम्भवन् अपकर्षो न कल्प्येत, विध्यानर्थक्यं हि तं प्रति ॥२४॥ (सि० यु० २)

इतश्च पश्यामः स्तुतिरिति । कुतः ? । इदं समामनन्ति, यो विदग्धः, स नैर्ऋतः । योऽशृतः, स रौद्रः । यः शृतः स दैवतः । तस्मादविदहता श्रपयितव्यः, स दैवतत्वाय इति, यदि स्तुतिः, दर्शपूर्णमासयोरेव शृतः स्ताविष्यते । तथा सम्भवन् अपकर्षो न कल्प्येत, अपकृष्यते इत्यपकर्षः । विधिपक्षे तु यत्र नैर्ऋतः, तत्र विदग्धता नीयेत । तथा सति प्रकरणं बाधितं भवेत् । दर्शपूर्णमासकर्म्म प्रति नैर्ऋताभावात् विदग्धविधानम् अनर्थकं स्यात्, तस्मात् स्तुतिरेव ।

## विधौ च वाक्यभेदः स्यात् ॥२५॥ (सि०यु०३)

औदुम्बरो यूपो भवति—इति विधावतस्मिन्नाश्रीयमाणे ऊर्जोऽवरुद्ध्यै इत्येतस्मिंश्च वाक्यं भिद्येत । इत्थम् औदुम्बरो यूपः प्रशस्तः, स चोर्जोऽवरुद्ध्यै इति । तस्मात् विधिवन्निगदानामपि स्तुतिरेव कार्य्यमर्थवादानाम् इति ।

(इति विधिवन्निगदाधिकरणम् । १ अ० । २ पा० । २ अ०)

---

अथ हेतुवन्निगदाधिकरणम् ।

## हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥२६॥ (पू०)

अथ ये हेतुवन्निगदाः शूर्पेण जुहोति, तेन ह्यन्नं क्रियते इत्येवमादयः । तेषु सन्देहः, किं स्तुतिस्तेषां

कार्य्यम्, उत हेतुः ? इति । किं प्राप्तम् ? हेतुः स्यादन्नकरणं होमस्य । ननु अप्रसिद्धे कार्य्यकारणभावे न हेतूपदेशः । सत्यमेवं लोके, विधायिष्यते तु वचनेन वेदे, सूर्पेण होमे कर्त्तव्ये अन्नकरणं हेतुरित्युपदिश्यते । किं प्रयोजनम् ? । अन्यदपि दर्विपिठरादि अन्नकरणम् यत्, तेनापि नाम कथं होमः क्रियेत इति । कुतः ? । तस्याप्यन्नक्रियायामर्थवत्ता, शक्यते च तेनाप्यन्नं कर्त्तुम्, एतद्धि क्रियते (५७।२१) इत्युच्यते । न हि, वर्त्तमानकालः कश्चिदस्ति । यस्याऽयं प्रतिनिर्द्देशः । हेतौ च श्रुतिः शब्दः, स्तुतौ लक्षणा । यदि च, दर्विपिठरादि न साक्षादन्नं करोतीति नान्नकरणम् इत्युच्यते । व्यर्थं तस्मिन् सूर्पस्तुतिरनर्थिका स्यात् । सूर्पमपि हि न साक्षादन्नं करोतीति तेन विनाऽर्थेन सूर्पस्य स्तुतिर्नोपपद्यते ।

**स्तुतिस्तु शब्दपूर्वत्वात्, अचोदना च तस्य॥२७॥सि०**

न तु एतदस्ति, शब्दपूर्वकोऽयमर्थः, अन्नकरणं हेतुः इति, शब्दश्च अन्नकरणं सूर्पहोमे हेतुः इत्याह, न च दर्वि-पिठरहोमे । तेन शब्दपूर्वं सूर्पं, न च दर्विपिठरादेश्चोदना

**व्यर्थे स्तुतिरन्याय्येति चेत् ॥२८॥ (सि०आ०)**

इति पुनर्यदुक्तं (५८।११) तत् परिहर्त्तव्यम् ।

**अर्थस्तु, विधिशेषत्वात्, यथा लोके ॥२९॥ (आ०नि०)**

अस्मत्पक्षेऽर्थोऽस्ति, वाक्यशेषो हि स विधेस्तदा भवति । संवादश्च स्तुतिवचनत्वेन, यथा वयं सूर्पेण अन्नं क्रियमाणं जानीमः, तथा सूर्पेणान्नं क्रियते इत्येव गम्यते । तदा च

अवर्त्तमानं स्तोतुं वर्त्तमानमित्युपदिशति। त्वत्पक्षे एष दोषः, यस्य ते हेतुविधिः। विधौ हि न परः शब्दार्थः प्रतीयते। न च, वर्त्तमानम् उपदिशन् वेदः शक्यमर्थं विदध्यात्। अस्मत्पक्षे तु एष परशब्दः परत्र वर्त्तते। यथा लोके, बलवान् देवदत्तो यज्ञदत्तादीन् प्रसहते इति प्रकृष्टबलेऽपि बलवच्छब्दो वर्त्तमानो न सिंहं शार्दूलं वा अपेक्ष्य प्रयुज्यते। ये देवदत्तात्तु निकृष्टबलाः,तान् अपेक्ष्य भवति। एवं, तेन हि अन्नं क्रियते इति प्रकृष्टान्नकरणेन संस्तवः सूर्पस्य,निकृष्टानि अन्यानि अन्नकरणानि अपेक्ष्य भविष्यति।

**यदि च हेतुः,अवतिष्ठेत निर्देशात्,सामान्यादिति चेत्, अव्यवस्था विधीनां स्यात् ॥३०॥ (सि०यु०)**

यद्यपि च भवेदन्नकरणं हेतुः दर्विपिठरप्रकाराणां, तथापि सूर्प एवावतिष्ठेत, शब्दात् अन्नकरणं हेतुः इति विज्ञायते, शब्दश्च सूर्पस्याह, न दर्विपिठरादीनाम्। तद्धि निर्दिश्यते, यस्मात् सूर्पेणान्नं क्रियते, तस्मात् सूर्पेण जुहोति इति यथा, यस्मात् बलवदुपध्मातोऽग्निः, तेन मे गृहं दग्धमिति, न, अनग्निरपि बलवदुपध्मातो दहति इति गम्यते। अथ मतं, येन येन अन्नं क्रियते प्रणाड्या, सूर्पादन्येनापि तेन तेनापि होमः क्रियते इति। अव्यवस्था विधीनां स्यात्, न केनचित्। प्रणाड्याऽन्नं क्रियते, तत्र यावदुक्तं स्यात्, जुहोति इति तावदेवान्नकरणेन जुहोति इति। अस्मत्पक्षे पुनः सूर्पं स्तूयते। तेन ह्यन्नं क्रियते इति वृत्तान्तान्वाख्यानं न च वृत्तान्तज्ञापनाय, किं तर्हि

प्ररोचनार्थैव । तस्माद्धेतुवन्निगदस्यापि स्तुतिरेव कार्य्यम् इति ।

( इति हेतुवन्निगदाधिकरणम् । १ अ० । २ पा० । ३ अ० )

---

अथ मन्त्रलिङ्गाधिकरणम् ।

## तदर्थशास्त्रात् ॥ ३१ ॥ (पू० १)

अथ इदानीं, किं विवक्षितवचना मन्त्राः, उताविवक्षितवचनाः ? (१) किमर्थप्रकाशनेन यागस्य उपकुर्वन्ति, उत उच्चारणमात्रेण ? (२) इति । यद्युच्चारणमात्रेण, तदा न नियोगतो बर्हिर्देवसदनन्दामि इत्येष बर्हिर्लवने विनियुज्येत । अभिधानेन चेत्, प्रकरणेन विज्ञाताङ्गभावो नान्यत्रोपकर्तुं शक्नोति इत्यन्तरेणापि वचनं, बर्हिर्लवन एव विनियुज्येत । इति तदेवमवगच्छामः, उच्चारणमात्रेणैवोपकुर्वन्तीति । कुत ? । तदर्थशास्त्रात्, यदभिधानसमर्थो मन्त्रः, तत्रैवैनं शास्त्रं निबध्नाति, उरुप्रथा उरु प्रथस्व इति पुरोडाशं प्रथयति इति, वचनमिदं अनर्थकं यदि अर्थाभिधानेनोपकुर्वन्ति । अथोच्चारणमात्रेण, ततो वक्तव्यो विनियोगः उक्तश्च । अतो नार्थाभिधानेन । यथा, साक्षः पुरुषः परेण नेत्रीयते, नूनमक्षिभ्यां न पश्यति इति गम्यते ।

नन्वर्थवादार्थं भविष्यतीति चेत् । न हि येन विधीयते, तस्य वाक्यशेषोऽर्थवादः इत्युक्तम् । न च निरपेक्षेण विहिते अर्थवादेन किञ्चिदपि प्रयोजनं क्रियते । अतो नार्थवादार्थं वचनम् (१) ।

तथाऽभ्यादानसमर्था मन्त्राः उदाहरणम् । लिङ्गादेव आदाने प्राप्ता वचनेन विधीयन्ते, तां चतुर्भिरादत्ते इति । चतुःसंख्यार्थमिति चेत् । न समुच्चयशब्दाभावात् (२) ।

तथा इमामगृभ्णन् रशनामृतस्य इत्यश्वाभिधानीमादत्ते इत्युदाहरणं, रशनादाने प्राप्तस्य रशनादाने एव शास्त्रं विनियोजकं, तत् विवक्षितार्थत्वे न घटेत । इति ।

ननु गर्दभरशनां परिसंख्यास्यति । न शक्नोति परिसंख्यातुं, परिसञ्चक्षाणो हि स्वार्थं च जह्यात्, परार्थञ्च कल्पेत, प्राप्तं च बाधेत । (३) ।

तस्मात् न विवक्षितवचना मन्त्राः, अतो न प्रमाणं, बर्हिर्देवसदनं दामि इत्यस्य रूपं बर्हिर्लवने विनियोगस्य ।

## वाक्यनियमात् ॥ ३२ ॥ (पू०२)

नियतपदक्रमा हि मन्त्रा भवन्ति, अग्निर्मूर्द्धा दिवः इति, न विपर्य्ययेण । यद्यर्थप्रत्यायनार्थाः, विपर्य्ययेणाप्यर्थः प्रतीयते, इति नियमोऽनर्थकः स्यात् । अथ उच्चारणविशेषार्थाः, विपर्य्यये अन्यदुच्चारणम् इति नियम आश्रीयते । तेन यतरस्मिन् पक्षे नियमो अर्थवान्, स नूनं पक्ष इति । ननु अर्थवत्स्वपि नियमो दृश्यते, यथा, इन्द्राग्नी इति । युक्तं तत्र तत्, विपर्य्ययेऽर्थप्रत्ययाभावात् ।

## बुद्धशास्त्रात् ॥ ३३ ॥ (पू०३)

बुद्धे खल्वपि पाठादर्थे तदभिधानसमर्थो मन्त्रो भवति अग्नीद् अग्नीद् विहरेत्, इति । स बुद्धे किं बोधयेत् ? ।

अथ तु उच्चारणविशेषार्थाः, बुद्धेऽप्युच्चारणविशेषोऽवकल्पते तेति। ननु पुनर्वचनात् संस्कारविशेषो भविष्यति। एवम्, अन्नतप्राणमेवाश्रितोऽसि, वचनमुच्चारणं, तद्धि शक्यते कर्तुं नार्थप्रत्यायनं, तत् प्रतीतेऽशक्यम्। यथा, सोपानत्के पादे द्वितीयामुपानहमशक्यत्वान्नोपादत्ते।

अविद्यमानवचनात् ॥ ३४ ॥ (पू० ४)

यज्ञे साधनभूतः प्रकाशयितव्यः, न च, तादृशोऽर्थोऽस्ति। यादृशमभिदधति, यथा चत्वारि शृङ्गा इति। न हि, चतुःशृङ्गं त्रिपादं द्विशिरस्कं सप्तहस्तं किञ्चित् यज्ञसाधनमस्ति। तदत्राभिधानार्थः किमभिदध्यात्?। उच्चारणार्थं त्ववकल्पते। तथा मा मा हिंसीः इत्यसत्यामपि हिंसायां किमभिदध्यात्?।

अचेतनेऽर्थबन्धनात् ॥ ३५ ॥ (पू० ५)

अचेतनेऽर्थे खल्वर्थं निबध्नन्ति, ओषधे त्रायस्वैनम् इति, अभिधानेनोपकुर्वन्त एवं जातीयका ओषधिं पशुत्राणाय प्रतिपादयेयुः, न च असावचेतना शक्या प्रतिपादयितुम्। उच्चारणार्थे तु नैष दोषो भवति। तस्मात् उच्चारणार्थाः। शृणोत ग्रावाणः इति च उदाहरणम्।

अर्थविप्रतिषेधात् ॥ ३६ ॥ (पू० ६)

अर्थविप्रतिषेधोऽपि भवति, अदितिर्द्यौरदितिरन्तरीक्षम् इति, सैव द्यौः तदेवान्तरीक्षम् इति को जातुचिदवधारयेत्?। अनवधारयंश्च किमभिधानेनोपकुर्य्यात्?। उच्चारणमात्रे तु नैष विरोधो भवति। तस्मात् उच्चार-

णार्थाः मन्त्राः । एको रुद्रः, न द्वितीयोऽवतस्थे, असंख्याताः सहस्राणि ये रुद्रा अधिभूम्याम् इति चोदाहरणम् ।

## स्वाध्यायवद्वचनात् ॥ ३७ ॥ (पू० ७)

स्वाध्यायकाले पूर्णिकाऽवहन्तिं करोति, माणवकोऽवहन्तिमन्त्रमधीते, नासौ तेन मन्त्रेण तदभिधानमभ्यस्यति, अक्षरानुपूर्व्याः अवधारणे एव यतते, येन च नाम प्रयोजनं, तदभ्यसितव्यम्, अत उच्चारणाभ्यासात् उच्चारणेन प्रयोजनम् इत्यवगच्छामः ।

## अविज्ञेयात् ॥ ३८ ॥ (पू० ८)

अपि च केषाञ्चिन्मन्त्राणाम् अशक्य एवार्थो वेदितुं, यथा, अम्यक् सात इन्द्र ऋष्टिरस्मे इति, सृण्येव जर्भरी तुर्फरीतू इति, इन्द्रः सोमस्य काणुका इति च । एते किं प्रत्याययेयुः ? । उच्चारणार्थे तु न दोषः । तस्मात् उच्चारणार्था मन्त्रा इति ।

## अनित्यसंयोगान्मन्त्रानर्थक्यम् ॥३९॥ (पू०५)

अनित्यसंयोगः खल्वपि भवेत् मन्त्रेष्वभिधानार्थेषु । यथा, किं ते कृण्वन्ति कीकटेषु गावः इति, कीकटा नाम जनपदाः (१) । नैचाशाखं नाम नगरं प्रमगन्दो राजा इति यदि अभिधानार्थाः, प्राक् प्रमगन्दात् नाऽयं मन्त्रोऽनुभूतपूर्व इति (२) गम्यते । तदेतैस्तदर्थशास्त्रादिभिः कारणैर्मन्त्राणाम् अविवक्षितवचनता ।

## अविशिष्टस्तु वाक्यार्थः ॥ ४० ॥ (सि०)

मसति प्रथने प्रथयतीति शब्दः ?। मन्त्राभिधानात्, मन्त्रेण पुरोडाशम् अध्वर्युः प्रथस्वेति ब्रूते, यश्चैवं प्रथस्वेति ब्रूते, स प्रथयति, यथा, यः कुर्विति ब्रूते, स कारयति।

अविरुद्धं परम् ॥ ४४ ॥ (उ० ४)

यदुक्तं, (२पू०) पदनियमस्यार्थवत्त्वादविवक्षितार्था मन्त्रा इति। काममनर्थको नियमः, न दृष्टमप्रमाणम्। नियतोच्चारणमदृष्टाय इति चेत्, अविरुद्धाऽदृष्टकल्पना अस्मत्पक्षेऽपि, एवं प्रत्याय्यमानमभ्युदयकारि भवति इति।

संप्रैषे कर्मगर्हानुपालम्भः संस्कारत्वात् ॥४५॥(उ०५

अथ यदुक्तं, (३ पू०) प्रोक्षणीरासादयेति बुद्धबोधनमशक्यम् अत उच्चारणाददृष्टम् इति। तत्र, कर्त्तव्यम् इत्यपि विज्ञाते अनुष्ठानकाले स्मृत्या प्रयोजनम् उपायान्तरेणापि सा प्राप्नोति, अतोऽनेनोपायेन कर्त्तव्येति नियमार्थमाम्नानं संस्कारत्वात्।

अभिधानेऽर्थवादः ॥ ४६ ॥ (उ० ६)

चत्वारि शृङ्गा (४पू०) इत्यसदभिधाने गौणः शब्दः, गौणीकल्पनाप्रमाणवत्त्वात्। उच्चारणाददृष्टमप्रमाणम्। चतस्रो होत्राः शृङ्गाणीवाऽस्य। त्रयोऽस्य पादाः इति सवनाभिप्रायम्। द्वे शीर्षे इति पत्नीयजमानौ। सप्त हस्तास इति छन्दांसि अभिप्रेत्य। त्रिधा बद्धः इति त्रिभिर्वेदैर्बद्धः। वृषभः कामान् वर्षतीति रोरवीति शब्दकर्म्मा महो देवो मर्त्यान् आविवेश इति मनुष्याधिकाराभिप्रायम्।

तत् यथा, चक्रवाकस्तनी हंसदन्तावली काशवस्त्रा शैवालकेशी नदी इति नद्याः स्तुतिः।

यज्ञसमृद्धये साधनानां चेतनसादृश्यम् उपपादयितुकाम आमन्त्रणशब्देन लक्षयति, ओषधे! त्रायस्वैनम् इति, (५ पू॰) शृणोत ग्रावाणः इति, अतःपरं प्रातरनुवाकानुवचनं भविष्यति, यत्राचेतनाः सन्तो ग्रावाणोऽपि शृणुयुः, किं पुनर्विद्वांसोऽपि ब्राह्मणाः इति, इत्थं च अचेतना अपि ग्रावाण आमन्त्र्यन्ते।

## गुणादविप्रतिषेधः स्यात् ॥ ४७ ॥ (उ॰ ७)

अदितिर्द्यौः इति (६पू॰) गौण एषः शब्दः अतो न विप्रतिषेधः। यथा त्वमेव माता, पितेति। तथैकरुद्रदेवत्ये एको रुद्रः, शतरुद्रदेवत्ये शतं रुद्रा इति अविरोधः।

## विद्यावचनमसंयोगात् ॥ ४८ ॥ (उ॰ ८)

यत्तु (पू॰ ७) अकर्मकालेऽवहन्तिमन्त्रेण माणवको न पूर्णिकाऽवहन्ति प्रकाशयितुमिच्छति इति। अयज्ञसंयोगात्, न यज्ञापकारायैतत् प्रकाशयितुमिच्छति। ननु प्रकाशनानभ्यासोऽक्षराभ्यासश्च परिचोदितः। उच्यते सौकर्य्यात् प्रकाशनानभ्यासः, दुर्ग्रहत्वाच्चाक्षराभ्यासः।

## सतः परमविज्ञानम् ॥ ४९ ॥ (उ॰ ९)

विद्यमानोऽप्यर्थः प्रमादालस्यादिभिर्नोपलभ्यते निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः कल्पयितव्यः, यथा सृण्येव जर्भरी तुर्फरीतू इत्येवमादीनि (८पू॰) अश्विनोरभिधानानि द्विवचनान्तानि लक्ष्यन्ते। अनेन अश्विनोः काम-

मग्रा इत्याश्विनं सूक्तमवगम्यते। देवताभिधानानि च घटन्ते, जर्भरीत्येवमादीनि। अवयवप्रसिद्धया च लौकिकेनार्थेन विशेष्यन्ते, एवं सर्वत्र।

उक्तश्चानित्यसंयोगः ॥ ५० ॥ (उ० १०)

परन्तु श्रुतिसामान्यमात्रं (१अ०। १पा०। ३५ सू०) इत्यत्र इति।

लिङ्गोपदेशश्च तदर्थवत् ॥ ५१ ॥ (सि० यु० १)

आग्नेय्याऽग्नीध्रमुपतिष्ठत इति विधानात्, विवक्षितार्थानामेव मन्त्राणां भवति लिङ्गेनोपदेशः, यदि तेऽग्निप्रयोजनाः, ततस्ते आग्नेय्याः, नाग्निशब्दसन्निधानात्।

ऊहः ॥ ५२ ॥ (सि० यु० २)

ऊहदर्शनं च विवक्षितार्थानामेव भवति। किमूहदर्शनम्?। न पिता वर्द्धते, न माता इति। अन्ये वर्द्धन्ते इति गम्यते, प्रत्यक्षं कौमारयौवनस्थाविरैः वर्द्धन्ते मात्रादयः, शब्दो न वर्द्धत इति ब्रूते। का पुनः शब्दस्य वृद्धिः?। यद्द्विवचन बहुवचनसंयोगः।

विधि-शब्दाश्च ॥ ५३ ॥ सि० यु०३)

विधिशब्दाश्च विवक्षितार्थानेव मन्त्राननुवदन्ति, शतं हिमाः शतं वर्षाणि जीव्यासमित्येतदेवाह इति।

इति मन्त्रलिङ्गाधिकरणम्। १अ०। २पा०। ४अ०।

इति श्रीमदाचार्य-श्रीशबरस्वामिकृतौ मीमांसाभाष्ये प्रथमस्य द्वितीयपादः। अर्थवादपादोऽयम्।

---

## अथ तृतीयः पादः।

### अथ स्मृतिप्रामाण्याधिकरणम्।

**धर्मस्य शब्दमूलत्वात् अशब्दमनपेक्षं स्यात् ॥ १ ॥**

**(पू०)**

एवन्तावत्कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम्, अथ इदानीं यत्र न वैदिकं शब्दं उपलभेमहि, अथ च स्मरन्ति, एवमयमर्थोऽनुष्ठातव्यः, एतस्मै च प्रयोजनाय इति। किम् असौ तथैव स्यात्, न वा? इति। यथा अष्टकाः कर्त्तव्याः गुरुरनुगन्तव्यः तड़ागं खनितव्यं प्रपा प्रवर्त्तयितव्या शिखाकर्म्म कर्त्तव्यम् इत्येवमादयः। तदुच्यते, धर्म्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात् इति। शब्दलक्षणो धर्म्मः इत्युक्तं चोदनालक्षणोऽर्थो धर्म्मः इति, अतो निर्मूलत्वान्नापेक्षितव्यमिति। ननु ये विदः इत्थम् अमी पदार्थः कर्त्तव्य इति, कथमिव ते वदिष्यन्ति, अकर्त्तव्य एवायम् इति?। स्मरणानुपपत्त्या, न हि अननुभूतोऽश्रुतो वाऽर्थः स्मर्य्यते। न च, अस्यावैदिकस्यालौकिकस्य च स्मरणमुपपद्यते। पूर्व्वविज्ञानकारणाभावादिति, या हि वन्ध्या स्मरेत, इदं मे दौहित्रकृतमिति, न मे दुहिताऽस्ति इति मत्वा, न जातुचिदसौ प्रतीयात्, सम्यगेतत् ज्ञानम् इति। एवमपि यथैव पारम्पर्य्येणाविच्छेदात् अयं वेदः इति प्रमाणमेषां स्मृतिः, एवम् इयमपि प्रमाणं भविष्यति इति। नैतदेवं, प्रत्यक्षेणोपलब्धत्वात् ग्रन्थस्य, नानुपपन्नं पूर्व्वविज्ञानम्, अष्ट-

कादिषु स्वदृष्टार्थेषु पूर्वविज्ञानकारणाभावात् व्यामोह-स्मृतिरेव गम्यते। तत् यथा, कश्चित् जात्यन्धो वदेत्, स्मराम्यहम् अस्य रूपविशेषस्य इति, कुतस्ते पूर्वविज्ञानम्? इति च पर्य्यनुयुक्तो जात्यन्धमेवाऽपरं विनिर्दिशेत्। तस्य कुतः? जात्यन्धान्तरात्, एवं जात्यन्धपरम्परायामपि सत्यां नैव जातुचित्सं प्रतीयुर्विद्वांसः सम्यग्दर्शनमेतत् इति। अतो न आदर्त्तव्यमेवं जातीयकमनपेक्ष्यं स्यादिति।

## अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥२॥

(सि०)

अपि वा इति पक्षो व्यावर्त्त्यते। प्रमाणं स्मृतिः, विज्ञानं हि तत्, किमिति अन्यथा भविष्यति?। पूर्ववि-ज्ञानस्य नास्ति, कारणाभावात् इति चेत्। अस्या एव स्मृतेर्दृढिम्नः कारणम् अनुमास्यामहे। तत्तु न अनुभव-नम्, अनुपपत्त्या, न हि, मनुष्या इहैव जन्मनि एवं जाती-यकमर्थमनुभवितुं शक्नुवन्ति। जन्मान्तरानुभूतं च न स्मर्य्यते। ग्रन्थस्तु अनुमीयेत, कर्तृसामान्यात् स्मृतिवैदि-कपदार्थयोः। तेन उपपन्नो वेदसंयोगस्त्रैवर्णिकानाम्।

ननु नोपलभ्यन्ते एवंजातीयकं ग्रन्थम्। अनुपलभ-माना अप्यनुमिमीरन्, विस्मरणमप्युपपद्यते इति, तदुप-पन्नत्वात् पूर्वविज्ञानस्य त्रैवर्णिकानां स्मरतां, विस्मरणस्य च उपपन्नत्वात् ग्रन्थानुमानमुपपद्यते इति प्रमाणं स्मृतिः।

अष्टकालिङ्गाश्च मन्त्रा वेदे दृश्यन्ते, यां जनाः प्रति-नन्दन्ति इत्येवमादयः। तथा प्रत्युपस्थितनियमाना-

माचाराणां दृष्टार्थत्वादेव प्रामाण्यं गुरोरनुगमात् प्रीतो गुरुः अध्यापयिष्यति,, ग्रन्थ ग्रन्थिभेदिनश्च न्यायान् परितुष्टो वक्ष्यति इति। तथा च दर्शयति, तस्मात् श्रेयांसं पूर्वं यन्तं पापीयान् पश्चादन्वेति इति। प्रपास्तड़ागानि च परोपकाराय, न धर्म्माय, इत्येवावगम्यते तथा च दर्शनं, धन्वन्निव प्रपा असि इति तथा स्थलयोदकं परिगृह्णन्ति इति च। गोत्रचिह्नं शिखाकर्म्म, दर्शनञ्च, यत्र बाणाः सम्पतन्ति इति। तेन ये दृष्टार्थाः, ते तत एव प्रमाणं, ये त्वदृष्टार्थाः, तेषु वैदिकशब्दानुमानमिति

(इति स्मृतिप्रामाण्याधिकरणम्। १अ०। ३पा०। १अ०)।

---

अथ श्रुतिप्राबल्याधिकरणम्।

**विरोधे त्वनपेक्ष्यं स्यात्, असति ह्यनुमानम् ॥३॥**

अथ यत्र श्रुतिविरोधः, तत्र कथम्?। यथा, औदुम्बर्य्याः सर्ववेष्टनम् औदुम्बरीं स्पृष्ट्वोद्गायेत् इति श्रुत्या विरुद्धम्। अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्य्यचरणं जातपुत्रः कृष्णकेशोऽग्नीनादधीत इत्यनेन विरुद्धम् (२)। क्रीतराजको भोज्यान्नः इति तस्मात् अग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्यम् इत्यनेन विरुद्धम् (३)। तत् प्रमाणं कर्तृसामान्यात्, इत्येवं प्राप्ते ब्रूमः, अशक्यत्वाद्व्यामोहः, इत्यवगम्यते। कथमशक्यता?। स्पर्शविधानात् न सर्वा शक्या वेष्टयितुम् उद्गायता स्पृष्टा च। तामुद्गायता स्पृष्ट-

व्यामवगच्छन्त: केनेमं संप्रत्ययं बाधेमहि सर्ववेष्टनस्मर-णेन ? इति ब्रूम: ।

ननु निर्मूलत्वाद्व्यामोह: तत् स्मरणम् इति वैदिकं वचनं मूलं भविष्यति इति । भवेद्वैदिकं वचनं मूलं, यदि स्पर्शनं व्यामोह: । अव्यामोहे त्वशक्यत्वात् अनुपपन्नम् । यथा, अनुभवनम् अनुपपन्नम् इति न कल्प्यते, तथा वैदि-कमपि वचनम् । कथं तर्हि सर्ववेष्टनस्मरणम् ? । व्यामोह: कथं व्यामोहकल्पना ? । श्रौतविज्ञानविरोधात् । अथ किमर्थं नेमौ विधी विकल्प्येते व्रीहियववत् बृहद्रथन्तर-वद्वा ? । नासति व्यामोहविज्ञाने विकल्पो भवति, यदि सर्ववेष्टनविज्ञानं प्रमाणं, स्पर्शनं व्यामोह:, यदि स्पर्शनं प्रमाणं, स्मृतिर्व्यामोह: । विकल्पन्तु वदन् स्पर्शनस्य पक्षे तावत्प्रामाण्यमनुमन्यते, तस्य च मूलं श्रुति:, सा चेत् प्रमाणमनुमता, न पाक्षिकी । पाक्षिकं च सर्ववेष्टनस्मरणं पक्षे तावन्न शक्नोति श्रुतिं परिकल्पयितुं स्पर्शविज्ञानेन बाधितत्वात् । ततश्चाव्यामोहे च तस्मिन्न शक्या श्रुति: कल्पयितुम् । न चाऽसावव्यामोह: पक्षे, पक्षे व्यामोहो भवि ष्यति इति, यदेव हि तस्यैकस्मिन् पक्षे मूलं, तदेवेतर-स्मिन्नपि, एकस्मिंश्चेत्पक्षे न व्यामोह: श्रुतिप्रामाण्यतुल्य-त्वादितरत्राप्यव्यामोह: । न च, असावेकस्मिन् पक्षे श्रुति-र्निर्बाधाक्षरा हि सा न प्रमादपाठ: इति शक्या गदितुम् । तेन, न एतत्पक्षे विज्ञानं व्यामोहात् पक्षान्तरं संक्रान्तम् इत्यवगम्यते । तत्र दु:श्रुतस्वप्नादिविज्ञानमूलत्वं तु सर्व-वेष्टनस्य इति विरोधात् कल्प्यते । न हि, तस्य सति

विरोधे प्रामाण्यमभ्युपगन्तव्यम् इति किञ्चिदस्ति प्रमाणम्। तस्मात् यथैवैकस्मिन् पक्षे न शक्या श्रुतिः कल्पयितुम्, एवम् अपरस्मिन् पक्षे, तुल्यकारणत्वात्।

अपि चेतरेतराश्रयेऽन्यतः परिच्छेदात्। केयमितरेतराश्रयता?। प्रमाणायां स्मृतौ स्पर्शनं व्यामोहः, स्पर्शने प्रमाणे स्मृतिर्व्यामोहः, तदेतदितरेतराश्रयं भवति। तत्र स्पर्शनस्य क्लृप्तं मूलं, कल्प्यं स्मृतेः, सोऽसावन्यतःपरिच्छेदः, कल्प्यमूलत्वात् स्मृतिप्रामाण्यमनवक्लृप्तम्। तदप्रामाण्यात् स्पर्शनं न व्यामोहः, तदव्यामोहात् स्मार्त्तश्रुतिकल्पनाऽनुपपन्ना प्रमाणाभावात्। ननु एवं सति व्रीहिसाधनत्वविज्ञानस्यापि अव्यामोहात् यवश्रुतिर्नोपपद्येत। सत्यं नोपपद्यते, यद्यप्रत्यक्षा स्यात् प्रत्यक्षा त्वेषा, न हि, प्रत्यक्षमनुपपन्नं नामास्ति द्वयोस्तु श्रुत्योर्भावात्, द्वे ह्येते वाक्ये, तत्रैकेन केवलयवसाधनता गम्यते, एकेन केवलव्रीहिसाधनता। न च, वाक्येनावगतोऽर्थोऽपह्नूयते। तस्मात् व्रीहियवयोरुपपन्नो विकल्पः, बृहद्रथन्तरयोश्च। तस्मात् उक्तं श्रुतिविरुद्धा स्मृतिरप्रमाणम् इति। अतश्च सर्ववेष्टनादि नादरणीयम्।

(इति श्रुतिप्राबल्याधिकरणम्। १अ०। ३पा०। २अ०)।

---

अथ दृष्टमूलकस्मृत्यप्रामाण्याधिकरणम्।

## हेतु-दर्शनाच्च ॥ ४ ॥

लोभात्तास आदित्समाना औदुम्बरीं कृत्स्नां वेष्टित-

वन्त: केचित्, तत् स्मृतेर्बीजम् (१)। बुभुक्षमाणा: केचित् क्रीतराजकस्य भोजनमाचरितवन्त: (२)। अपुंस्त्वं प्रच्छादयन्तश्चाष्टाचत्वारिंशद्वर्षाणि देवब्रह्मचर्यं चरितवन्त: (३)। तत एषा स्मृति: इत्यवगम्यते।

अधिकरणान्तरं वा, वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति इति, यूपहस्तिनो दानमाचरन्ति इति, तत् कर्तृसामान्यात् प्रमाणम् इति प्राप्तेऽप्रमाणं स्मृति:, अन्यान्यमूलं, लोभादाचरितवन्त: केचित् तत एषा स्मृति:। उपपन्नतरञ्चैतत् वैदिकवचनकल्पनात्।

(इति दृष्टमूलकस्मृत्यप्रामाण्याधिकरणम्। १अ०। ३पा०। ३अ०)

---

अथ पदार्थप्राबल्याधिकरणम्।

शिष्टाकोपेऽविरुद्धमिति ॥ ५ ॥ (पूर्वपक्ष पृ०)

आचान्तेन कर्त्तव्यं यज्ञोपवीतिना कर्त्तव्यं दक्षिणाचारेण कर्तव्यम् इत्येवं लक्षणानि उदाहरणानि। किमेतानि श्रुतिविरुद्धानि न कर्त्तव्यानि, उताविरुद्धानि कार्य्याणि? इति। इति चेत् पश्यसि, तैरप्यनुष्ठीयमानैर्वैदिकं किञ्चिन्न कुप्यति। तस्मात् अविरुद्धानि इति।

न, शास्त्रपरिमाणत्वात् ॥ ६ ॥ (पृ०)

नैतदेवं, शास्त्रपरिच्छिन्नं हि क्रमं बाधेरन्। कथम्?। वेदं कृत्वा वेदिं कुर्वीत इतीमां श्रुतिमुपरुन्ध्यात्। अन्तरा वेदं वेदिं च, अनुष्ठीयमानमाचमनादि। दक्षिणेन चैकहस्तेनानुष्ठीयमानेषु पदार्थेषु कदाचित् प्रधानं स्वकालम्

अतिक्रामेत्, उभाभ्यां हस्ताभ्याम् अनुतिष्ठन् प्रधानकालं सम्भावयिष्यति ।

**अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ७ ॥**

**( सि० )**

अपि वा इति पक्षव्यावृत्तिः । अगृह्यमाणकारणा एवं जातीयकाः प्रमाणम् । ननु क्रमकालौ विरुद्धन्ति । विरुद्धन्तु, नैष दोषः, आचमनं पदार्थः, पदार्थानां च गुणः क्रमः, न च, गुणानुरोधेन पदार्थो न कर्त्तव्यो भवति । अपि च प्राप्तानां पदार्थानाम् उत्तरकालं क्रम आपतति, यदा पदार्थः प्राप्नोति, तदा क्रम एव नास्ति केन सह विरोधो भविष्यति? इति । तथा यदि दक्षिणेन नाचर्य्यते, कालो मा विरोधीत् इति, तत्र कालानुरोधेन पदार्थो नाऽन्यथात्वमभ्युपगच्छेत् । प्रयोगाङ्गं हि कालः पदार्थानामुपकारकः, अतो न कालानुरोधेन व्यथयितव्यः पदार्थः अपि च शौचं दक्षिणाचारता यज्ञोपवीतित्वं च एवंजातीयका अर्थाः व्यवधातारो न भवन्ति, सर्वपदार्थानां शेषभूतत्वात् । तस्मात् आचमनादीनां प्रामाण्यम् ।

(इति पदार्थप्राबल्याधिकरणम् । १ अ० । ३ पा० । ४ अ० ) ।

---

अथ शास्त्रप्रसिद्धपदार्थप्रामाण्याधिकरणम् ।

**तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ॥ ८ ॥**

**( पू० )**

यवमयश्चरुः वाराही उपानही वैतसे कटे प्राजापत्यान्

सञ्चिनोति इति यववराहवेतसशब्दान् समामनन्ति। तत्र केचिद्दीर्घशूकेषु यवशब्दं प्रयुञ्जन्ते, केचित् प्रियङ्गुषु। वराह शब्दं केचित् शूकरे, केचित् कृष्णशकुनौ। वेतसशब्दं केचित् वञ्जुलके, केचित् जम्ब्वाम्। तत्रोभयथा पदार्थावगमाद्विकल्पः।

## शास्त्रस्था वा तन्निमित्तत्वात् ॥ ९ ॥ (सि०)

वाशब्दः पक्षं व्यावर्त्तयति। यवशब्दो यदि दीर्घशूकेषु सादृश्यात् प्रियङ्गुषु भविष्यति, यदि प्रियङ्गुषु, सादृश्यात् यवेषु। किं सादृश्यम्?। पूर्वसस्ये क्षीणे भवन्ति दीर्घशूकाः प्रियङ्गवश्च, एतत् तयोः सादृश्यम्। कः पुनरत्र निश्चयः?। यः शास्त्रस्थानां, स शब्दार्थः। के शास्त्रस्थाः?। शिष्टाः, तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च। तेन शिष्टा निमित्तं श्रुतिस्मृत्यवधारणे। ते ह्येवं समामनन्ति, यवमयेषु करम्भपात्रेषु विहितेषु वाक्यशेषं, यत्रान्या ओषधयो म्लायन्ते, अथैते मोदमाना इवोत्तिष्ठन्ति इति, दीर्घशूकान् यवान् दर्शयति वेदः। वेदे दर्शनात् अविच्छिन्नपारम्पर्यो दीर्घशूकेषु यवशब्दः इति गम्यते। तस्मात् प्रियङ्गुषु गौणः, तस्मात् दीर्घशूकानां पुरोडाशः कर्त्तव्यः। तस्माद्वराहं गावोऽनुधावन्ति इति शूकरे वराहशब्दं दर्शयति, अप्सुजो वेतसः इति वञ्जुले वेतसशब्दम्। शूकरं हि गावोऽनुधावन्ति, वञ्जुलोऽप्सु जायते, जम्बूवृक्षः स्थले गिरिनदीषु वा।

(इति शास्त्रप्रसिद्धपदार्थप्रामाण्याधिकरणम्। १अ०। ३पा०। ५अ०)।

—

अथ म्लेच्छप्रसिद्धार्थप्रामाण्याधिकरणम्।

चोदितन्तु प्रतीयेताविरोधात् प्रमाणेन ॥१०॥

अथ यान शब्दान् आर्य्या न कस्मिंश्चिदर्थे आचरन्ति, म्लेच्छास्तु कस्मिंश्चित् प्रयुञ्जन्ते, यथा पिक-नेम-सत-तामरसादिशब्दाः, तेषु सन्देहः, किं निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः कल्पयितव्यः, उत यत्र म्लेच्छा आचरन्ति, स शब्दार्थः ? इति। शिष्टाचारस्य प्रामाण्यम् उक्तं, नाशिष्टस्मृतेः। तस्मान्निगमादिवशेनार्थकल्पना, निगमादीनां चैवं अर्थवत्ता भविष्यति। अनभियोगश्च शब्दार्थेष्वशिष्टानाम्, अभियोगश्चेतरेषाम्। तस्माद्धातुतोऽर्थः कल्पयितव्यः इत्येवं प्राप्ते ब्रूमः, चोदितमशिष्टैरपि शिष्टानवगतं प्रतीयेत, यत् प्रमाणेनाविरुद्धं, तत् अवगम्यमानं न न्याय्यं त्यक्तुम्। यत्तु शिष्टाचारः प्रमाणम् इति, तत् प्रत्यक्षानवगतेऽर्थे। यत्तु अभियुक्ताः शब्दार्थेषु शिष्टाः इति, तत्रोच्यते,अभियुक्ततराः पक्षिणां पोषणे बन्धने च म्लेच्छाः। यत्तु निगमनिरुक्तव्याकरणानामर्थवत्तेति, तत्रैषामर्थवत्ता भविष्यति, न यत्र म्लेच्छैरप्यवगतः शब्दार्थः। अपि च निगमादिभिरर्थे कल्प्यमानेऽव्यवस्थितः शब्दार्थो भवेत्, तत्र अनिश्चयः स्यात्। तस्मात् पिक इति कोकिलो ग्राह्यः, नेमोऽर्द्धं, तामरसं पद्मं, सत इति दारुमयं पात्रं, परिमण्डलं शतच्छिद्रम्।

(इति म्लेच्छप्रसिद्धार्थप्रामाण्याधिकरणम्। १अ०। ३पा०। ६अ०)।

---

अथ कल्पसूत्रास्वतःप्रामाण्याधिकरणम् ।

## प्रयोगशास्त्रमिति चेत् ॥ ११ ॥ (पू०)

इह कल्पसूत्राण्युदाहरणं, माशकं, हास्तिकं, कौण्डिन्यकम् इति, एवं लक्षणकानि किं प्रमाणमप्रमाणं वा ? इति सन्दिग्धानि । किं प्राप्तं ? प्रयोगस्य शास्त्रं प्रमाणमेवं जातीयकम् इति ब्रूमः । सत्यवाचामेतानि वचनानि । कथमवगम्यते ? । वैदिकैरेषां संवादो भवति, य एव हि वेदे ग्रहाः, त एवेह, या एव वेदे इष्टकाः, ता एवेह । तस्मात् सत्यवाच आचार्य्याः, आचार्य्यवचः प्रमाणम् इति च श्रुतिः । प्रत्यक्षतः प्रामाण्यमनवगतम् इति यद्युच्येत, प्रमाणान्तरेण वचनेनावगतम् इति न दोषः । वेदवाक्यैश्चैषां तुल्य आदरः तस्मात् प्रमाणम् ।

## न, असन्नियमात् ॥ १२ ॥ (सि०)

नैतदेवम्, असन्नियमात् न एतत्सम्यग्निबन्धनं, स्वराभावात् ।

## अवाक्यशेषाच्च ॥ १३ ॥ (सि०यु०)

ऋत्विजो वृणीते, वृता यजन्ति, देवयजनमध्यवस्यन्ति इति, नात्र विधिर्गम्यते वर्त्तमानकालप्रत्ययनिर्देशात्, न चात्र वाक्यशेषः स्तावकोऽस्ति । तस्मात् अप्रमाणम् । यश्च आदर उक्तः, स नान्तरीयकत्वात्, वेदवाक्यमिश्रसमाम्नानात् । यत्तु, श्रुतिः इति, नैतत्, अर्थवादत्वात् । कथमर्थवादः ? । विध्यन्तरं हि भवति, आग्नेयोऽष्टाकपालः इति । अत्राचार्यो वेदोऽभिप्रेतः आचिनोत्यस्य बुद्धिम्

इति यद्वा आचार्य्यवचनं प्रमाणं तदपेक्षम् । कतरत्तत् ? । यत् प्रमाणगम्यम् ।

यच्चोक्तं, सत्यवाचामेतानि वचनानि इति । तन्न,

## सर्वत्र च प्रयोगात् सन्निधान-शास्त्राच्च ॥१४॥(उ०)

आचार्य्यवचनं हि भवति पूर्वपक्षे सर्वासु तिथिष्वमावास्या इति, सन्निहितञ्च शास्त्रं, पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत इति, तेन श्रुतिविरुद्धवचनान्न सत्यवाचः, तस्मात् अप्रमाणम् ।

( इति कल्पामवाक्यतःप्रामाण्याधिकरणम् । १ अ० । ३ पा० । ७अ० )

---

अथ होलाकाधिकरणम्

( सामान्याश्रुतिकल्पनाधिकरणम् )

## अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥१५॥ (पू०)

अनुमानात् स्मृतेराचाराणां च प्रामाण्यमिष्यते, येनैव हेतुना ते प्रमाणं, तेनैव व्यवस्थिताः प्रामाण्यमर्हन्ति । तस्मात् होलाकादयः प्राच्यैरेव कर्त्तव्याः, आह्नीनैवुकादयो दाक्षिणात्यैरेव, उद्वृषभयज्ञादयो उदीच्यैरेव । यथा शिखाकल्पो व्यवतिष्ठते, केचित् त्रिशाखाः, केचित् पञ्चशिखाः इति ।

## अपि वा सर्वधर्मः स्यात्, तन्न्यायत्वाद्विधानस्य ॥१६॥ (सि०)

अपि वा इति पक्षव्यावृत्तिः, एवंजातीयकः सर्वधर्म्मः स्यात्। कुतः ?। तन्न्यायत्वात् विधानस्य, (विधीयतेऽनेन इति) विधानं शब्दः, सोऽनुमीयते स्मृत्या। न च तस्याऽऽकृतिवचनता न्याय्या, न च व्यक्तिवचनता, न सर्वेषामनुष्ठातॄणां यदेकं सामान्यं, तस्य वाचकः कश्चित् शब्दोऽस्ति, योऽनुमीयेत। तस्मात् सर्वधर्म्मता विधेर्न्याय्या। कुतः ?। पदार्थाः कर्त्तव्याः इति प्रमाणमस्ति, व्यवस्थायान्तु न किञ्चित् प्रमाणमस्ति।

अथ यदुक्तं, यथा शिखाकल्पो व्यवतिष्ठते इति,

**दर्शनाद्विनियोगः स्यात् ॥ १७ ॥** (उ० १)

गोत्रव्यवस्थया शिखाकल्पव्यवस्थायां दर्शनं स्पष्टम्।

**लिङ्गाभावाच्च नित्यस्य ॥ १८ ॥** (सि० यु०)

इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रम्। कानि तानि पदानि ?। अथ किमर्थं न लिङ्गाद्व्यवस्था ? यथा, शुक्लो होता इति। नास्ति तत् नित्यमेषां लिङ्गं, यत् यथादर्शनमनुवर्त्तेत। येऽपि श्यामा वृहन्तो लोहिताक्षाः, तेऽपि न सर्वे आक्षीनेवुकादीन् कुर्वते। अनेवंलिङ्गा अपि चानुतिष्ठन्ति। तस्मान्न व्यवस्था। शुक्लो होता इति तु प्रत्यक्षा श्रुतिः।

**आख्या हि देशसंयोगात् ॥ १९ ॥** (सि०भा०नि०

अथ कस्मान्न समाख्यया नियमः ? ये दाक्षिणात्याः इति समाख्याताः, ते आक्षीनेवुकादीन् करिष्यन्ति। ये उदीच्याः इति समाख्याताः, ते उदगृषभयज्ञादीन्। ये

प्राच्याः इति, ते होलाकादीन्। यथा, राजा राजसूयेन इति नैवदेवं, देशसंयोगात् आख्या भवति, दक्षिणदेशा-न्निर्गतः प्राच्युं वा उदच्चु वाऽवस्थितः आह्नीनैबुकादीन् करोत्येव। उदीच्याश्च देशान्तरे उदृवृषभयज्ञादीन्, प्राच्याश्च होलाकादीन्, अन्यदेशश्च देशान्तरगतो न नियोगतः परप-दार्थान् करोति। तस्मात् व्यवस्था। राजा राजसूयेन इति तु नियता जातिः।

न स्याद्देशान्तरेष्विति चेत् ॥२० ॥ (सि॰आ॰)

इति चेत् पश्यसि, यदि देशसंयोगात् आख्या भवेत्, देशान्तरस्थस्य न भवेत्। भवति च देशान्तरस्थस्य माथुरः इत्यसंबद्धस्यापि मथुरया। तस्मान्न देशसंयोगात् आख्या।

स्याद्योगाख्या हि माथुरवत् ॥ २१ ॥ (आ॰नि॰)

देशसंयोगनिमित्तायामप्याख्यायां देशान्निर्गतस्य त-दाख्या न विरुद्धा, यत एषा योगाख्या (योगमात्रापेक्षा), न भूतवर्त्तमान भविष्यत्सम्बन्धापेक्षा, यतो दृश्यते, मथु-राममभिप्रस्थितो माथुरः इति, मथुरायां वसन्, माथु-राया निर्गतश्च। यस्य तु अतोऽन्यतमः सम्बन्धो नास्ति, न स माथुरः, तस्मान्न समाख्यया व्यवस्था।

---

कर्मधर्मो वा प्रवणवत् ॥ २२ ॥ ( आ॰ )

अथ कस्मान्न कर्म्माङ्गं देशः ?। यः कृष्णमृत्तिकाप्रायः, स आह्नीनैबुकादीनां, यथा प्राचीनप्रवणे वैश्वदेवेन यजेत इति।

## तुल्यन्तु कर्तृधर्मेण ॥ २३ ॥ (प्रा० नि०)

यथा कर्त्तरि अव्यवस्थितं लिङ्गं श्यामादि न पदार्थैः संवादमुपैति, तद्वत् देशलिङ्गम् अव्यवस्थितम्। कृष्ण-मृत्तिकाप्रायेऽप्यन्ये न कुर्वन्ति, तथा अन्यलिङ्गेऽपि कुर्वन्ति। तस्मान्न देशतो व्यवस्था। प्राचीनप्रवणन्तु श्रुत्या नियतं वैश्वदेवस्य।

(इति होलाकाधिकरणम् ॥ १अ० ३पा० ८अ० )।

---

अथ साधुपदप्रयुक्ताधिकरणम्।

## प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २४ ॥ (पू० )

गौ गावी गोणी गोपोतलिका इत्येवमादयः शब्दा उदाहरणम्। गोशब्दो यथा सास्नादिमति प्रमाणं, किं तथा गाव्यादयोऽपि, उत न? इति सन्देहः, किमनेकः शब्दोऽविच्छिन्नपारम्पर्योऽर्थाभिधायी, इतरे अपभ्रंशाः, उत सर्वेऽनादयः?। सर्वे इति ब्रूमः। कुतः?। प्रत्ययात्. प्रतीयते हि गाव्यादिभ्यः सास्नादिमान् अर्थः। तस्मात् इतो वर्षशतेऽप्यस्यार्थस्य सम्बन्ध आसीदेव, ततः परेण, ततश्च परतरेणेति अनादिता, कर्त्ता चाऽस्य सम्बन्धस्य नास्ति इति व्यवस्थितमेव। तस्मात् सर्वे साधवः सर्वैर्भाषितव्यं, सर्वे हि साधयन्त्यर्थं, यथा, हस्तः करः पाणिः इति। अर्थाय ह्येते उच्चार्य्यन्ते, न अदृष्टाय, न हि, एषामुच्चारणं

शास्त्रमस्ति । तस्मान्न व्यवतिष्ठेत, कश्चिदेक एव साधुः, इतरेऽसाधव: इति ।

**शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥२५॥(सि०)**

महता प्रयत्नेन शब्दं उच्चरन्ति, वायुर्नाभेरुत्थितः, उरसि विस्तीर्णः कण्ठे विवर्त्तितः, मूर्द्धानमाहत्य, पराहतः, वक्त्रे विचरन् विविधान् शब्दानभिव्यनक्ति । तत्रापराध्येताऽपि उच्चारयिता, यथा शुष्के पतिष्यामि इति कर्दमे पतति, सकृत् उपस्प्रक्ष्यामि इति द्विः उपस्पृशति । ततोऽपराधात् प्रवृत्ता गाव्यादयो भवेयुः, न नियोगतोऽविच्छिन्नपारम्पर्य्या इति ।

**अन्यायश्चानेकशब्दत्वम् ॥ २६ ॥ (सि०यु०)**

न चैष न्यायः, यत्, सदृशाः शब्दाः एकमर्थम् अभिनिविशमानाः, सर्वेऽविच्छिन्नपारम्पर्य्या एव इति, प्रत्ययमात्रदर्शनादभ्युपगम्यते, सादृश्यात् साधुशब्देऽप्यवगते प्रत्ययोऽवकल्पते । तस्मात् अमीषामेकोऽनादिः, अन्येऽपभ्रंशाः । हस्तः करः पाणिः इत्येवमादिषु तु अभियुक्तोपदेशात् अनादिरमीषामर्थेन सम्बन्धः इति ।

**तत्र तत्त्वमभियोगविशेषात् स्यात् ॥ २७ ॥**
**( आ०नि०)**

कथं पुनः तत्र तत्त्वं शक्यं विज्ञातुम् ? । शक्यम् इत्याह अर्थिनो हि अभियुक्ता भवन्ति, दृश्यते चाभियुक्तानां गुणयतामविस्मरणम् उपपन्नम् । प्रत्यक्षञ्चैतत् गुण्यमानं न

भ्रश्यते इति। तस्मात् यमभियुक्ता उपदिशन्ति, एष एव साधुः इति, साधुः इत्यवगन्तव्यः।

तदशक्तिश्चानुरूपत्वात् ॥ २८ ॥ (उ० १)

अथ यदुक्तं, (२६।८) अर्थोऽवगम्यते गाव्यादिभ्यः, अतः एषामप्यनादिरर्थेन सम्बन्धः इति, तदशक्तिरेषां गम्यते, गोशब्दमुच्चारयितुकामेन केनचित् अशक्त्या गावी इत्युच्चारितम्, अपरेण ज्ञातं, सास्नादिमान् अस्य विवक्षितः, तदर्थं गौः इत्युच्चारयितुकामो गावी इति उच्चारयति, ततः शिक्षित्वा अपरेऽपि सास्नादिमति विवक्षिते गावी इति उच्चारयन्ति। तेन गाव्यादिभ्यः सास्नादिमान् अवगम्यते। अनुरूपो हि गाव्यादिर्गोशब्दस्य।

एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ॥२९॥ (उ०यु०)

अतएव हि विभक्तिव्यत्ययेऽपि प्रत्ययो भवति, अश्मकैरागच्छामि इति अश्मकशब्दैकदेशे उपलब्धे अश्मकेभ्यः इत्येव शब्दः स्मर्य्यते, ततः अश्मकेभ्यः इत्येषोऽर्थ उपलभ्यते इति, एवं गाव्यादिदर्शनात् गोशब्दस्मरणं, ततः सास्नादिमान् अवगम्यते।

(इति साधुपदप्रयुक्ताधिकरणम्। १ अ०। ३ पा०। ९ अ०)

---

अथ लौकिकवैदयोः शब्दैक्याधिकरणम्।

आकृतिशक्त्यधिकरण-प्रारम्भः।

प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥३०॥(पू०१)

अथ गौः इत्येवमादयः शब्दाः किमाकृतेः प्रमाणं, उत

व्यक्तः ? इति सन्देहः। उच्यते। इदं तावत् परीक्ष्यतां, किं य एव लौकिकाः शब्दाः, त एव वैदिकाः, उतान्ये ? इति। यदा त एव, तदाऽपि किं त एवैषामर्थाः, ये लोके, उतान्ये ? इति संशयः। तत्रान्ये लौकिकाः शब्दाः, अन्ये वैदिकाः, अन्ये चैषामर्थाः इति ब्रूमः। कुतः ?। व्यपदेशभेदात्, रूपभेदाच्च। इमे लौकिकाः, इमे वैदिकाः, इति व्यपदेशभेदः। अग्निर्वृत्राणि जङ्घनत् इत्यन्यत् इदं रूपं लौकिकात् अग्निशब्दात्। शब्दान्यत्वाच्च न त एवार्थाः। अपि च समामनन्ति, उत्ताना वै देवगवा वहन्ति इति, ये देवानां गावः, त उत्तानाः वहन्ति इत्युक्ते गम्यते एव ये उत्ताना वहन्ति, ते गोशब्देन उच्यन्ते इति। तस्मात् अन्यो वैदिकगोशब्दस्यार्थः। तथा देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम् इति। हिरण्यपर्णो देवो वनस्पतिर्वेदे एतत् वै दैव्यं मधु, यत् घृतम् इति वेदे घृते मधुशब्दः तस्मादमीषामन्येऽर्थाः इति प्राप्ते,

ब्रूमः, य एव लौकिका शब्दाः, त एव वैदिकाः, त एवैषामर्था इति। कुतः ?। प्रयोगचोदनाभावात्, एवं, प्रयोगचोदना सम्भवति, यदि त एव शब्दाः। त एवार्थाः, इतरथा शब्दान्यत्वेऽर्थो न प्रतीयेत। तस्मादेकशब्दत्वमिति। उच्यते प्रयोजनमिदं, हेतुर्व्यपदिश्यताम् ? इति। ततो हेतुः उच्यते, अविभागात् इति, न तेषां एषाञ्च विभागम् उपलभामहे। अत एव एकशब्दत्वं, तांश्च तांश्चार्थान् अवगच्छामः। अतो नान्यत्वञ्च वदामः। यच्चोक्तं (८५।८)

ये उत्ताना वहन्ति, ते देवगवाः, यत् घृतं, तन्मधु, यो हिरण्यपर्णः, स वनस्पतिः इति। नास्ति वचनं, यत् उत्तानानां वहतां गोत्वं ब्रूयात्, ये गावः, ते उत्ताना वहन्ति इत्येवं तत्। यदि च अनेन वचनेन गोत्वं, विधीयते, उत्ताना वहन्ति इत्यनुवादः स्यात्। न च, उत्ताना वहन्तः प्रसिद्धाः केचित्। ते नियोगतो विधातव्याः, तेषु विधीयमानेषु न शक्यं गोत्वं विधातुं, भिद्यते हि तथा वाक्यम्। यदि चाम्ये वैदिकाः, तत उत्तानादीनामर्थो न गम्येत, तत्र नतरां शक्येताऽविज्ञातलक्षणं गोत्वं विज्ञातम्। न चोत्तानवहनवचनमप्यनर्थकं, स्तुत्यर्थेनार्थवत् भविष्यति इति। एवं घृतस्य मधुत्वं, हिरण्यपर्णता च वनस्पतेः। तस्मात् त एव शब्दा पर्यायः।

( इति लौकवेदयोः शब्दैक्याधिकरणम्। १अ०। ३पा०। १०अ० अन्तर्गतम्)

---

यदि, लौकिकास्त एवार्थाः, तदा सन्देहः, किमाकृतिः शब्दार्थोऽथ व्यक्तिः? इति। (का पुनराकृतिः, का व्यक्तिः? इति। द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिः, असाधारणविशेषा व्यक्तिः।) कुतः संशयः?। गौः इत्युक्ते सामान्यप्रत्ययात्, व्यक्तौ च क्रियासम्बन्धात्।

तदुच्यते, व्यक्तिः शब्दार्थः इति। कुतः?। प्रयोगचोदनाभावात्, आलम्भनप्रोक्षणविशसनादीनां प्रयोगचोदना आकृत्यर्थे न सम्भवेयुः। यथोच्चारणानर्थक्यं, तत्र व्यक्त्यर्थः, अतोऽन्यत्राकृतिवचनः इति चेत्। उक्तं (८३। ११) अन्यायश्चानेकार्थत्वम् इति। कथं सामान्यावगतिः? इति चेत्।

व्यक्तिपदार्थकस्याकृतिश्चिह्नभूता भविष्यति, य एवमाकृतिकः, स गौरिति, यथा यस्य दण्डोऽस्ति, स दण्डी इति, न च दण्डवचनो दण्डिशब्दः, एवम् इहाऽपि ।

## अद्रव्यशब्दत्वात् ॥ ३१ ॥ (पू० २)

द्रव्याश्रयस्य शब्दो द्रव्यशब्दः, न तत्र द्रव्याश्रयवचनः शब्दो भवेत्, यद्याकृतिः शब्दार्थो भवेत्, षड्देया द्वादश देया चतुर्विंशतिर्देया इति । न हि, आकृतिः षडादिभिः संख्याभिर्युज्यते । तस्मान्नाकृतिवचनः ।

## अन्यदर्शनाच्च ॥ ३२ ॥ (पू०३)

यदि पशुरुदाकृतः पलायेत, अन्यं तद्वर्णं तद्वयसमालभेत इति । यद्याकृतिवचनः शब्दो भवेत्, अन्यस्यालम्भो नोपपद्येत । अन्यस्यापि पशुद्रव्यस्य सैवाकृतिः । तस्मात् व्यक्तिवचन इति ।

## आकृतिस्तु क्रियार्थत्वात् ॥ ३३ ॥ (सि०)

तुशब्दः पक्षं व्यावर्त्तयति । आकृतिः शब्दार्थः । कुतः ? क्रियार्थत्वात् श्येनचितं चिन्वीत इति वचनमाकृतौ सम्भवति, यद्याकृत्यर्थः श्येनशब्दः । व्यक्तिवचने तु न चयनेन श्येनव्यक्तिरुत्पादयितुं शक्यते इति अशक्यार्थवचनात् अनर्थकः । तस्मात् आकृतिवचनः ।

ननु श्येनव्यक्तिभिश्चयनमनुष्ठास्यते । न साधकतमः श्येनशब्दार्थः, ईप्सिततमो ह्यसौ श्येनशब्देन निर्दिश्यते । अतश्चयनेन श्येनो निवर्त्तयितव्यः, स आकृतिवचनत्वेऽव-कल्पते ।

ननु उभयत्र क्रियाया असम्भव एव व्यपदिश्यते, नाकृतिः शब्दार्थः, कुतः ? क्रिया न सम्भवेदाकृतौ शब्दार्थे व्रीहीन् प्रोक्षति इति। तथा न व्यक्तिः शब्दार्थः क्रियैव न सम्भवेत् व्यक्तेः शब्दार्थत्वे श्येनचितं चिन्वीत इति। यदप्युच्येत, व्रीहीन् प्रोक्षति इति व्यक्तिलक्षणार्था आकृतिः इति। शक्यमन्यत्रापि श्येनचितं चिन्वीत इति वदितुम् आकृतिलक्षणार्था व्यक्तिः इति। किं पुनरत्र न्यायः ?

आकृतिः शब्दार्थः इति। यदि व्यक्तिशब्दार्थो भवेत् व्यक्त्यन्तरे न प्रयुज्येत। अथ व्यक्त्यन्तरे प्रयुज्यते, न तर्हि व्यक्तिः शब्दार्थः, सर्वसामान्यविशेषविनिर्मुक्ता हि व्यक्तिरिति। उच्यते, नैष दोषः, व्यक्त्यन्तरे सर्वसामान्यविशेषविनिर्मुक्ते एव प्रवर्त्स्यते। यदि व्यक्त्यन्तरे सर्वसामान्यविशेषवियुक्ते प्रवर्त्स्यत, सामान्यमेव तर्हि तत्। न इत्युच्यते, यो हि अर्थः सामान्यस्य विशेषाणाञ्चाश्रयः, सा व्यक्तिः, व्यक्तिवचनश्च शब्दो न सामान्ये, न विशेषे वर्त्तते। तेषां त्वाश्रयमेवाभिदधाति, तेन व्यक्त्यन्तरे वृत्तिरदोषः, न हि तत् सामान्यम्।

यदि व्यक्त्यन्तरेष्वपि भवति, सर्वसामान्यविशेषवियुक्तायाम् अश्वव्यक्तौ गोशब्दः किमिति न वर्त्तते ? आह, येष्वेव प्रयोगो दृष्टः, तेषु वर्त्स्यते, न सर्वत्र। न च, अश्वव्यक्तौ गोशब्दस्य प्रयोगो दृष्टः। तस्मात्तत्र न वर्त्स्यते। यदि यत्र प्रयोगो दृष्टः, तत्र वृत्तिः। अद्यजातायां गवि प्रथमप्रयोगो न प्राप्नोति। तत्रादृष्टत्वात् सामान्यप्रत्ययश्च न प्राप्नोति, इयमपि गौः इति इयमपि गौरिति।

इयं वा गौरिति, इयं वा गौरिति स्यात् । भवति तु सामान्यप्रत्ययः अदृष्टपूर्वायामपि गोव्यक्तौ, तस्माच प्रयोगापेक्षो गोशब्दो व्यक्तिवचनः इति शक्यते आश्रयितुम् । एवं तर्हि शक्तेः स्वभाव एषः, यत्, कस्याञ्चिद् व्यक्तौ वर्त्तते, कस्याञ्चिन्न । यथा, अग्निरुष्णः, उदकं शीतम्, एवमेतत् भविष्यति इति । नैवं सिद्ध्यति, न हि, एतत् गम्यते कस्याञ्चिद्व्यक्तौ वर्त्तते, कस्याञ्चित् न इति ।

सत्यमेतत्, गोत्वं लक्षणं भविष्यतीति, यत्र गोत्वं तस्यां व्यक्ताविति । एवं तर्हि विशिष्टा व्यक्तिः प्रतीयेत । यदि च विशिष्टा, पूर्वतरं विशेषणम् अवगम्येत । न हि, अप्रतीते विशेषणे विशिष्टं केचन प्रत्येतुमर्हन्ति । इति । अस्तु विशेषणत्वेनाकृतिं वक्ष्यति, विशेष्यत्वेन व्यक्तिं, न हि, आकृतिपदार्थकस्य व्यक्तिर्न पदार्थः, व्यक्तिपदार्थकस्य वा न आकृतिः । उभयमुभयस्य पदार्थः, कस्यचित् किञ्चित्प्राधान्येन विवक्षितं भवति, तेन अत्राकृतिर्गुणभावेन, व्यक्तिः प्रधानभावेन विवक्ष्यते इति ।

नैतदेवम्, उभयोरुच्यमानयोर्गुणप्रधानभावः स्यात्, यदि चाकृतिः प्रतीयते शब्देन, तदा व्यक्तिरपि पदार्थः इति न शक्यते वदितुम् । कुतः ? आकृतिर्हि व्यक्त्या नित्यसंबद्धा, सम्बन्धिन्याश्च तस्यामवगतायां सम्बन्ध्यन्तरमवगम्यते । तदेतत् आत्मप्रत्यक्षं, यत्, शब्दे उच्चरिते व्यक्तिः, प्रतीयते इति । किं शब्दात् उत आकृतेः ? इति विभागो न प्रत्यक्षः । सोऽन्वयव्यतिरेकाभ्यामवगम्यते, अन्तरेणापि शब्दं, य आकृतिमवबुध्येत, अवबुध्येतैवासौ व्यक्तिम् । य

उच्चरितेऽपि शब्दे मानसादपचारात् कदाचिदाकृतिं नोप-
लभेत, न जातुचिदसौ इमां व्यक्तिमवगच्छेत। ननु व्यक्ति-
विशिष्टायाम् आकृतौ वर्त्तते। व्यक्तिविशिष्टायाञ्चेत् वर्त्तते,
व्यक्त्यन्तरविशिष्टा न प्रतीयेत। तस्मात् शब्द आकृतिप्रत्य-
यस्य निमित्तम्, आकृतिप्रत्ययो व्यक्तिप्रत्ययस्य इति।

ननु गुणभूता प्रतीयते इत्युक्तं (८८।१५)। न गुण-
भावोऽस्मत्पक्षस्य बाधकः, सर्व्वथा तावत् प्रतीयते, अर्थात्
गुणभावः प्रधानभावो वा, स्वार्थं चेत् उच्चार्य्यते, प्रधान-
भूता अथ न स्वार्थं, परार्थमेव। ततो गुणभूता, न तत्र
शब्दव्यापारोऽस्ति।

ननु च दण्डी इति न तावत् दण्डिशब्देन दण्डोऽभि-
धीयते, अथ च दण्डविशिष्टोऽवगम्यते, एवमिहापि न ताव-
दाकृतिरभिधीयेत, अथ चाकृतिविशिष्टा व्यक्तिर्गम्येत इति
नैतत् साधु उच्यते। सत्यं दण्डिशब्देन दण्डो नाभिधीयते,
नत्वप्रतीते दण्डे दण्डिप्रत्ययोऽस्ति, अस्ति तु दण्डिशब्दैक-
देशभूतो दण्डशब्दः, येन दण्डः प्रत्यायितः। तस्मात् साधु
एतत्, यत्, प्रतीते विशेषणे विशिष्टः प्रतीयते इति।

ननु गोशब्दावयवः कश्चिदाकृतेः प्रत्यायकः, अन्यो
व्यक्तेः। यत उच्येत, तत आकृतिरवगता। न गोशब्द
आकृतिवचनः इति। न च, यथा दण्डिशब्दो न दण्डे
प्रयुक्तः, एवं गोशब्दो न आकृतौ। तदर्थमेव निदर्शितं
(८७।५) केवलाकृत्यभिधानः श्येनशब्दः इति, तदेवमन्वय-
व्यतिरेकाभ्याम् असति श्येनव्यक्तिसम्बन्धे श्येनशब्दोच्चा-
रणात् आकृतिवचन इति गम्यते। न तु गौराकृतिसम्बन्ध-

मन्त्रेण व्रीहिव्यक्तौ शब्दस्य प्रयोगो दृष्टः । तस्मात् आकृतिवचनः शब्दः इत्येतन्न्यायः ।

न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत् ॥ ३४ ॥ (उ० १)

अथ यदुक्तं न क्रिया सम्भवेत्, व्रीहीन् प्रोक्षति इति (१ पू०) । न द्रव्यशब्दः स्यात् षड् देया इति (२ पू०) : अन्यदर्शनवचनञ्च न स्यात् अन्यं तद्रूपम् इति (३ पू०) । तत् परिहर्त्तव्यम् ।

तदर्थत्वात् प्रयोगस्याविभागः ॥३५॥ (उ० २)

आकृत्यर्थत्वात् शब्दस्य, यस्याः व्यक्तेराकृत्या सम्बन्धः, तत्र प्रयोगः, प्रोक्षणं हि द्रव्यस्य कर्त्तव्यतया श्रूयते, कतमस्य ? यत् यजतिसाधनम् । अपूर्वप्रयुक्तत्वात्तस्य, न आकृतेः, अशक्यत्वात् । तत्र व्रीहिशब्द आकृतिवचनः प्रयुज्यते प्रोक्षणाश्रयविशेषणाय । स हि आकृतिं प्रत्याययिष्यति आकृतिः प्रतीता सती प्रोक्षणाश्रयं विशेष्यति इति, तेनाकृतिवचनं न विरुध्यते इति । एवं षड् देया गावो दक्षिणा इति दक्षिणाद्रव्ये संख्याया प्रयोक्तव्ये गाव इत्याकृतिवचनो विशेषकः । तथा अन्यम् इति विनष्टस्य प्रतिनिधिरन्यत्वसम्बन्धः, तत्र पशुशब्द आकृतिवचनः, आकृत्या विशेष्यति इति । तस्माद्गौरश्वः इत्येवमादयः शब्दाः आकृतेरभिधायका इति सिद्धम् ।

(इति आकृतिशब्दाधिकरणम् । १अ० । ३पा० । १०अ० ) ।

इति श्रीशबरस्वामि-कृतौ मीमांसाभाष्ये प्रथमाध्यायस्य तृतीयः पादः । स्मृतिपादोऽयम् ।

## चतुर्थ पादः ।

अथ उद्भिदादिशब्दानां यागनामताधिकरणम् ।

### उक्तं समाम्नायैदमर्थ्यं तस्मात् सर्वं तदर्थं स्यात् ॥ १ ॥ (पू०)

उद्भिदा यजेत बलभिदा यजेत अभिजिता यजेत विश्वजिता यजेत इति समामनन्ति । तत्र सन्देहः, किं उद्भिदादयो गुणविधयः, आहोस्वित् कर्मनामधेयानि? इति । कुतः संशयः? उभयथाऽपि प्रतिभातो वाक्यात्, उद्भिदा इत्येष शब्दो यजेत इत्यनेन सम्बध्यते, स किं वैयधिकरण्येन सम्बन्धमुपैति, उद्भिदा द्रव्येण यागमभिनिर्वर्त्तयेदिति, उत सामानाधिकरण्येन, उद्भिदा यागेन यजेत इति द्वेधाऽपि एतस्मिन् प्रतिभाति वाक्ये, सम्भवति संशयः ।

किं तावत् प्राप्तम्? उक्तमस्माभिः, समाम्नायस्यैदमर्थ्यम्, कश्चिदस्य भागो विधिः, योऽविदितमर्थं वेदयति, यथा सोमेन यजेत इति । कश्चिदर्थवादः, यः प्ररोचयन् विधिं स्तौति, यथा वायुर्वै क्षेपिष्ठा देवता इति । कश्चिन्मन्त्रः, यो विहितमर्थं प्रयोगकाले प्रकाशयति, यथा बर्हिर्देवसदनन्दामि इत्येवमादि । तस्मादुद्भिदादयोऽमीषां प्रयोजनानामन्यस्मै प्रयोजनाय भवेयुः, तत्र तावन्नार्थवादः, वाक्यशेषो हि स भवति विधातव्यस्य । न च मन्त्रः, एवं जातीयकस्य प्रकाशयितव्यस्य अभावात्, परिशेष्यात् गुणविधिः, उद्भिद्गुणता यागस्य विधीयते ।

कुतः ? प्रसिद्धेरनुग्रहात्, गुणविधेरर्थवत्त्वात्, प्रवृत्ति-विशेषकरत्वाच्च । न च, एषां यागार्थता लोकेऽवगम्यते । न च, वेदेन परिभाष्यते । अतो गुणविधयः । यदि गुणविधिः, न तर्हि कर्म्म विधीयते, अविहिते च कर्म्मणि तत्र गुणविधानमनर्थकम् । न इति ब्रूमः, प्रकृतौ ज्योतिष्टोमे गुणविधानमर्थवद्भविष्यति, यदि नामधेयं स्यात्, यावदेव यजेत इति, तावदेव उद्भिदा यजेत इति, न प्रवृत्तौ कश्चिद् गुणविशेषः स्यात् । गुणविधौ च गुणसंयोगात् अभ्यधिकमर्थं विदधतः उद्भिदादयः शब्दा अर्थवन्तो भविष्यन्ति । तस्मात् गुणविधय इत्येवं प्राप्तम् ।

एवं प्राप्ते ब्रूमः,

## अपि वा नामधेयं स्यात् यदुत्पत्तावपूर्वमविधायकत्वात् ॥ २ ॥ (सि०)

अपि वा इति पक्षो विपरिवर्त्तते । नामधेयं स्यात् इति प्रतिजानीमहे, एवमविहितमर्थं विधास्यति ज्योतिष्टोमात् यागान्तरं श्रुतिश्चैवं यागमभिधास्यति । इतरथा श्रुतिरुद्भिदादीन् वदन्ती उद्भिदादिमतो लक्षयेत् । उद्भिदता यागेन कुर्य्यादिति । यागेन कुर्य्यादिति यजेत इत्यस्यार्थः, करणं हि यागः, उद्भिदाद्यपि तृतीयानिर्देशात् करणं, तत्र उद्भिदा यागेन इति कर्म्मनामधेयत्वेन सामानाधिकरण्यसामञ्जस्यं, द्रव्यवचनत्वे मत्वर्थलक्षणया सामानाधिकरण्यं स्यात् । श्रुतिलक्षणाविषये च श्रुतिर्ज्यायसी । तस्मात् कर्म्मनामधेयम् । ननु प्रसिद्धं द्रव्यवचनत्वमपकृ-

येत, अप्रसिद्धं कर्मवचनत्वं प्रतिज्ञायेत। उच्यते, तृतीया-निर्देशात् कर्मवचनता। कुतः? करणवाचिनो हि प्रातिपदिकात् तृतीया भवन्ति, करणं च यागः, तेन यागवचनमिममनुमास्यामहे।

नैतद्युक्तं, यदि तृतीयानिर्देशे सति उद्भिदादिभ्यः शब्देभ्यो यागे बुद्धिरुत्पद्येत, स्यादेतदेवम्। न हि नो बुद्धिरुत्पद्यते, तस्मात् अयुक्तम्। तृतीयावचनम् अन्यथा नोपपद्यते इति चेत्। कामं नोपपादि, न जातुचित् अनवगम्यमानेऽपि यागवचनो भविष्यति, तस्मात् गुणविधयः। लक्षणेति चेत्, वरं लक्षणा कल्पिता,न यागाभिधानं, लौकिकी हि लक्षणा, हठोऽप्रसिद्धकल्पनेति। अपि च यदि नामधेयं विधीयते, न यागः। अथ यागः, न नामधेयम्। उभयविधाने वाक्यभेदः इति उच्यते, न नामधेयं विधायिष्यते, अनुवादा हि उद्भिदादयः। कुतः प्राप्तिः? इति चेत्। ततोऽभिधीयते, उच्छब्दसामर्थ्यात् भिच्छब्दसामर्थ्याच्च उद्भिच्छब्दः क्रियावचनः, उद्भेदनं प्रकाशनं पशूनामनेन क्रियते इत्युद्भित् यागः, एवमाभिमुख्येन जयात् अभिजित्, विश्वजयात् विश्वजित्, एवं सर्वत्र। अतः कर्मनामधेयम्। यत्त्वप्रवृत्तिविशेषकरोऽनर्थकः इति, नामधेयमपि गुणफलोपबन्धे नार्थवत्। तस्मात् कर्मनामधेयान्येवंजातीयकानि इति सिद्धम्।

(इति उद्भिदादिशब्दानां यागनामधेयताधिकरणम्। १अ०। ४पा०। १अ०)

---

अथ चित्रादिशब्दानां यागनामधेयताधिकरणम्।

## यस्मिन् गुणोपदेशः प्राधानतोऽभिसम्बन्धः ॥ ३ ॥

चित्रया यजेत पशुकामः त्रिवृद्वहिष्पवमानम् पञ्चदशान्याज्यानि सप्तदश पृष्ठानि इत्युदाहरणम्। किं चित्राशब्दः, पवमानशब्दः, आज्यशब्दः, पृष्ठशब्दश्च गुणविधयः, उत कर्म्मनामधेयानि? इति संशयः। प्रसिद्धेः अर्थवत्त्वात्, प्रवृत्तिविशेषकरत्वाच्च गुणविधयः। न चैते कर्म्मणि प्रसिद्धाः, न चामी यौगिकाः। जातिशब्दा ह्येते चित्रा इति च गुणशब्दः। चित्रया यजेत इति च यागानुवादः, विज्ञातत्वात् न यागविधिः। गुणे फलकल्पनायां यजतेर्न विवक्षा, तथा आज्यानि भवन्ति, पृष्ठानि भवन्ति इति च। गुणविधिकल्पनायामपि न लक्षणा। तस्मात् गुणविधयः इत्येवं प्राप्तम्।

एवं प्राप्ते ब्रूमः, यस्मिन् गुणविधिर्नामधेयम् इति सन्दिग्धे गुणोऽपरः उपदिश्यते, प्रधानेन कर्म्मणा तस्य सम्बन्धः, कर्म्मनामधेयम् इत्यर्थः। गुणविधौ हि सति वाक्यं भिद्येत। पुंपशौ प्राप्ते स्त्रीपशुः, पशवः फलम्, चित्रो गुणः इति न शक्यमेकेन वाक्येन विधातुम्। चित्रो गुणो विधीयमानः स्त्रियां विधीयेत, नासावग्नीषोमीये पशुकामे च विधीयेत, सोऽपि नाग्नीषोमीये। तथा पञ्चदशानि आज्यानि भवन्तीति आज्येषु पञ्चदशता। न चाविहितानि स्तोत्राण्याज्यानि भवन्ति, न चान्यद्विधायकं वाक्यम्, तच्चैतदाज्यानि विदध्यात्, विहितेषु च पञ्चदशताम्। गम्यते च पञ्चदशताया आज्यानां च

सम्बन्धः। स्तोत्रसम्बन्धश्चाज्यानामविज्ञातः पञ्चदशता-सम्बन्धश्च, द्वावेतावर्थावेकवाक्यस्याशक्यौ विधातुम्। अथ नु कर्म्मनामधेयं, नैष विरोधो भवति, केवलं संख्यासंबन्धस्तदानीं विधीयते। अपि चाज्यानि स्तोत्राणीत्यनेन शब्देन लक्षणयैव गुणो विधीयेत। अतः कर्म्मणां नामधेयानि (वाक्यान्तरैः आज्यैः स्तुवते, पृष्ठैः स्तुवते इत्येवमादिभिर्विहितानाम्)। यत्तु अप्रसिद्धं कर्म्मणां नामधेयम् इति, अवयवप्रसिद्धया आजिगमनादाज्यानि। कथमाजिगमनम्? इति। अर्थवादवचनात्, यदाजिमीयुस्तदाज्यानामाज्यत्वम् इति स्पर्शवचनात् पृष्ठानि। पवमानार्थमन्त्रकत्वाद्बहिःसम्बन्धाच्च बहिष्पवमानम्। दधि मधु पयोघृतं धानास्तण्डुला उदकम् इति नानाविधद्रव्यत्वाच्चित्रा। तस्मादेवंजातीयकानि कर्म्मनामधेयानि इति। अथ कस्माच्च पञ्चदशसंख्याविशिष्टानि आज्यानि स्तोत्रकर्म्मसु विधीयन्ते? विशिष्टानां वाचकस्य शब्दस्याभावात्।

ननु पदद्वयमिदं वाचकं भविष्यति, पञ्चदशान्याज्यानि इति विशिष्टानां, तदेतेषु स्तोत्रेषु विधास्यति। न एतत् पदद्वयमपि विधायकम्, एकमत्र विधायकम्, एकमुद्देशकम्, उभयस्मिन् विधायके परस्परेण सम्बन्धो न स्यात्। अविधायके स्तोत्रसम्बन्धो न विधीयते, न च अत्रैकं पद विशेषणं प्रति उद्देशकं, स्तोत्रं प्रति विधायकं भवितुमर्हति। वचनव्यक्तिभेदादतोऽयमसमाधिः। (१।४।२अ०)

——

अथ अग्निहोत्रादिशब्दानां यागनामधेयताधिकरणम्। ( तत्प्रख्यन्याय: )

## तत्प्रख्यञ्चान्यशास्त्रम् ॥ ४ ॥

अग्निहोत्रं जुहोति स्वर्गकामः इति आघारमाघारयति इति च समामनन्ति। तत्र संशयः, किम् अग्निहोत्रशब्दः आघारशब्दश्च गुणविधी, उत कर्मनामधेये? इति। गुणविधी इति ब्रूमः। कुतः? गम्यते हि अग्नये होत्रमस्मिन् इति, तथा चरणसमर्थं द्रव्यं घृतादि आघारमाघारयति इति, प्रसिद्धिरेवमनुग्रहीष्यते। गुणविधिश्च दर्विहोमे, आघारश्चोपांशुयाजे, तत्रैतयोरर्थवत्ता प्रवृत्तिविशेषकरत्वञ्च। न च गुणविधिपक्षे लक्षणा भवति, यथोद्भिदा यजेत इति। अग्निहोत्रे समासेन अवगतं गुणविधानम्। आघारेऽपि आघारं निर्वर्त्तयति इति श्रुत्यैव गुणो विधीयते। तस्मात् गुणविधी इत्येवं प्राप्ते

ब्रूमः, तत्प्रख्यञ्चान्यशास्त्रं, यौ गुणावेताभ्यां विधीयेते इत्याशङ्क्यते, तावन्यत एव अवगतौ, यदग्नये च प्रजापतये च सायं जुहोति इति देवताविधानम्। चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य्य इति आघारे च द्रव्यविधिः। अविदितवेदनञ्च विधिः इत्युच्यते, विदितं चात्रान्यतो गुणविधानम्। तस्मान्न गुणविधी, कर्मनामधेये तु सम्भवतः, यस्मिन्नग्नये होत्रं होमो भवति, तदग्निहोत्रम्। दीर्घधारा क्षरणक्रिया प्रसिद्ध एवाघारः, तस्मात् कर्मनामधेये। प्रसिद्धग्रादयश्चोक्तोत्तराः (१।४।१ अ० २अ०)। प्रजापतिनिवृत्त्यर्थमग्निविधानं भविष्यति इति चेत्। नैतदेवम्,

अग्निं हि एष विधातुं शक्नोति, न प्रजापतिं प्रतिषेद्धुम्। प्रतिषिध्यमानस्य च प्रजापतेर्विधानमनर्थकं स्यात्। प्रजापतिर्देवता इति गम्यते, गम्यमानं च न शक्यं मिथ्येति कल्पयितुम्। अतोऽयमसमाधिः। उच्यते, आघारमाघारयति इति द्रव्यपरा चोदना, येन द्रव्यं चिकीर्ष्यते इति, द्रव्यं ह्यनया क्रियया चार्य्यते, चारितं च यागं साधयति। तत्कस्य प्रधानस्य कर्म्मणो नामधेयम्? इति। उच्यते, एतदेवाघारणं प्रधानकर्म्म। नन्वस्य द्रव्यदेवतं नास्ति। अस्ति इति ब्रूमः, तस्याघारमाघार्य्या इति आज्यं द्रव्यं, मान्त्रवर्णिकी देवता, इन्द्र ऊर्द्धोऽध्वर इत्याघारमाघारयति इति मन्त्रो हि अभिदधत् कर्म्म, तत्साधनं वा कर्म्मणि समवैति। एष च मन्त्र इन्द्रमभिधातुं शक्नोति, स यदि इन्द्रः तत्साधनं भवेत्, एवम् अनेन मन्त्रेणाघारः शक्यते कर्त्तुम्। तस्मात् इन्द्रो देवता, द्रव्यदेवतासंयुक्तम् आघारणम्। तस्मात् यजतिः, तस्य यजतेर्नामधेयम् इति। (१।४।३अ०)।

---

अथ श्येनादिशब्दानाम् यागनामधेयताधिकरणम्। (तद्व्यपदेशन्यायः)।

## तद्व्यपदेशं च ॥ ५ ॥

अथैष श्येनेन अभिचरन्यजेत अथैष सन्दंशेन अभिचरन्यजेत अथैष गवाऽभिचरन्यजेत इति समाम्नायन्ते। तत्र गुणविधिः, कर्म्मनामधेयम् इति सन्देहः। प्रसिद्ध्यादिभिः पूर्वपक्षः, उद्भिदादीनामिव। ते तूद्भिदादयः क्रियानिमित्ताः शक्नुवन्ति यागं वदितुम्। इमे पुनर्जातिनिमित्ता न

शक्नुवन्ति, तेन गुणविधयः इत्येवं प्राप्तम् । एवं प्राप्ते ब्रूमः, तद्व्यपदेशश्च, तेन श्येनादिना ( प्रसिद्धेन ) यस्य व्यपदेशः, तच्च कर्मनामधेयं, श्रुतिर्हि नामधेयत्वे, लक्षणा गुणविधौ। यत्तु जातिशब्दा इमे न यागमभिवदन्ति इति, सादृश्य-व्यपदेशादभिवदिष्यन्ति, एवं हि व्यपदेशो भवति, यथा वै श्येनो निपत्यादत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्या-दत्ते, यमभिचरन्ति श्येनेन इति, निपत्यादत्ते इत्यनेन सादृश्येन श्येनशब्दो यागे। यथा सिंहो देवदत्तः इति, तस्मात् कर्मनामधेयम् । सन्दंशे सन्दंशेन यथा दूरादान-मादत्ते इति, गवि यथा गावो गोपायन्ति इति, तस्मात् सन्दंशशब्दोऽपि कर्मनामधेयं, गोशब्दोऽपि । (१।४।४अ०)

---

अथ वाजपेयादिशब्दानां नामधेयताधिकरणम् ।

## नामधेये गुणश्रुतेः स्याद्विधानम् इति चेत्॥६॥ (पू०)

वाजपेयेन स्वाराज्यकामो यजेत इति श्रूयते। तत्र किं गुणविधिः, कर्मनामधेयम् इति सन्देहः। एवं चेत् सन्देहः, दृश्यते गुणविधिः न सन्देहः श्रूयते हि गुणः, सो-ऽवगम्यमानो न शक्यो नास्ति इति वदितुं, तस्मात् गुण-विधिः ।

## तुल्यत्वात् क्रिययोर्न ॥ ७ ॥ ( सि० )

नैतदेवं, तुल्ये हि इमे क्रिये स्यातां, या च वाजपेय-क्रिया, या च दर्शपूर्णमासक्रिया, उभयत्र दार्शपौर्णमासिको

विध्यन्तः स्यात्, तथा च दीक्षाणामुपसदाञ्च दर्शनं नावकल्पेरत। सप्तदशदीक्षो वाजपेयः इति, सप्तदशोपसत्को वाजपेयः इति।

अथ वा तुल्यत्वात् क्रिययोर्न इति यदि न गुणविधिः, ततस्तुल्यैषा वाजपेयक्रिया ज्योतिष्टोमक्रियया। तत्र दीक्षाणामुपसदाञ्च दर्शनमुपपन्नम्। तस्मात् कर्म्मनामधेयमिति, लिङ्गं त्वेतत्प्राप्तिः पुनरुत्तरसूत्रेण।

## ऐकशब्द्ये परार्थवत् ॥ ८ ॥ (सि०यु०)

यदि गुणविधिः स्यात्, स्वार्थवत् परार्थवच्चाभिधानं विप्रतिषिध्येत यजेतेत्यस्य शब्दस्य। यदि स्वाराज्यकामो यजेत इति स्वाराज्यकामस्य यागं विधातुं स्वार्थमुच्यते, न तर्हि वाजपेयेन गुणेन संबद्धं परार्थमनूद्येत। यागेन वाजपेयगुणकेन इति भिद्येत हि तथा वाक्यम्। ननु द्वे एवैते वाक्ये प्रत्यक्षमुपलभामहे, स्वाराज्यकामो यजेत इत्येतदेकं प्रत्यक्षं पदद्वयं, यजेत वाजपेयेन इत्येतदपि प्रत्यक्षमेव। नैतदेवम्, एवं सति चत्वारि पदान्युपलभेमहि, त्रीणि चैतान्युपलभ्यन्ते। उच्यते, यजेत इत्येतदुभाभ्यां संभंत्स्यते। कथं सकृदुच्चारितं संबन्धमुभाभ्यामेष्यति? इति। रूपाभेदात्, ईदृशमेवास्य रूपं स्वाराज्यकामेन संबध्यमानस्य, ईदृशमेव वाजपेयेन, अतः तन्त्रेणोभाभ्यां संभंत्स्यते इति। नैतदस्ति, ईदृशेनैव रूपेण इति यद्यज्ञातः, ततो विधिः, यदि ज्ञातः, ततोऽनुवादः, न च ज्ञातोऽज्ञातश्च युगपत् सम्भवति इति। आह, यदिद-

मुक्तं गुणविधिपक्षेऽनुवादो यजेत इति। यद्ययमनुवादः, केन इदानीं गुणो विधीयते। वाजपेयशब्देन इति भावोच:, न ह्याख्यातमन्तरेण कृत्यं वा नाम शब्दार्थस्य व्यापारो विधीयते। यश्चाचाख्यातशब्दो यजेत इति, सोऽनुवादः इत्युक्तम्। केन इदानीं तस्य व्यापारो विधीयते? अतः स्वाराज्यकामं गुणं च प्रति यजेत इति विधिः। तस्मादुभाभ्यां संबध्यते इति। यद्युभयत्र विधिः वाजपेयो न स्वाराज्यकामस्य यागेन संबध्येत। द्वे ह्येते तदा वाक्ये, न स्वाराज्यकामस्य यागेन सह गुणविधेरेकवाक्यता। प्रकरणात् संबन्धः स्वाराज्यकामस्य यागेन इति चेत्, न, वाक्येन यागमात्रे विधानात्। अस्तु यागमात्रेण संबन्धः इति चेत्, न, स्वाराज्यकामस्य यागेन सह एकवाक्यताया गम्यमानत्वात्, तदेवं प्रकरणस्य वाक्यस्य च बाधो युज्यते, यदि कर्मनामधेयं, गुणविधिपक्षे हि सर्वे इमे वाक्यभेदादयो दोषाः प्रादुर्भवेयुः। तस्मात् कर्मनामधेयं वाजपेयशब्दः इति सिद्धम्। (१।४।५ अ०)

---

अथाग्नेयादीनामनामताधिकरणम्।

तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः ॥ ६ ॥

यथाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति इत्येवमादयः श्रूयन्ते। तत्र सन्देहः, किम् आग्ने-

योऽग्नीषोमीयः इत्येवमादयो गुणविधयः, कर्मनामधेयानि। इति। किं तावत् प्राप्तम्। गुणविधौ सत्यनेको गुणो विधीयेत, अग्निपुरोडाशाष्टाकपालाः इति, तस्मात् गुण-विधयः इत्येवं प्राप्ते

ब्रूमः, तत्र कर्म, गुणाश्चास्य विधीयेरन्, अविभक्ता हि ते कर्मणो विधानार्थे तद्धितान्ते शब्दे। तत्र हि अष्टा-कपालस्याग्नेयता विधीयते, स एष एवमाग्नेयो भवति, यदग्नये सङ्कल्प्य दीयते, तेनायम् अनेन प्रकारेण यागो विहितो भवति, स एवंविधीयमानो न शक्यतेऽग्निमष्टा-कपालं चाविधाय विधातुम्, सम्बन्धो हि विधीयमानो न शक्यते सम्बन्धिनाववविधाय विहित इति वक्तुम्। तस्मात् गुणविधयः, अष्टसु कपालेषु संस्क्रियमाणो व्रीहिमयो यव-मयो वा पुरोडाश एव भवति, सोऽनुवादः, सिद्धश्चात्राष्टा-कपाल उच्यते, कपालेषु श्रपयति इति वचनात् नान्येन अर्पितं गृह्णन्ति, तेनास्मिन् पक्षे न वाक्यभेदो भवति, न चेदन्येन शिष्टाः। यत्र पुनरन्येन वचनेन शिष्टा गुणा भवन्ति, भवति तत्र नामधेयं, यथा अग्निहोत्रं जुहोति इति। (१।४। ६ अ०)

---

अथ वर्हिरादिशब्दानां जातिवाचिताधिकरणम्।

वर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः॥१०॥

वर्हिराज्ययोः पुरोडाशे च सन्देहः, किमेते संस्कार-शब्दा, उत जातिशब्दाः? इति। संस्कारशब्दाः इति ब्रूमः,

संस्कृतेषु द्रव्येषु बर्हिःशब्दमुपचरन्ति सर्वत्र, नासंस्कृतेषु, संस्कृते च घृते आज्यशब्दं, तथा संस्कृते पिष्टे पुरोडाशशब्दम् । ननु असंस्कृतेऽपि कस्मिंश्चिद्देशे उपचर्य्यते, यथा बर्हिरादाय गावो गताः इति भवन्ति वक्तारः । तथा आज्यं क्रय्यम् इति, पुरोडाशेन मे माता प्रहेलकं ददाति इति । सादृश्यात्तेषु प्रयोगः यथोपशये यूपशब्दः । कुतः एतत् ? यत एकदेशे हि शब्दप्रयोगः, तस्मात् संस्कारशब्दाः इत्येवं प्राप्तम् ।

एवं प्राप्ते ब्रूमः, बर्हिरादिष्वसंस्कृतेष्वपि शब्दलाभात् न संस्कारशब्दाः । ननु उक्तं सादृश्यादेकदेशे भविष्यन्ति । तत्र, प्रसिद्धे हि संस्कारशब्दत्वे सादृश्यात् इति शक्यते वक्तुम्, तच्चाप्रसिद्धम् । कथम् ? बर्हिरादिशब्दैरुद्दिश्य संस्कारा विधीयन्ते, तेन सत्सु शब्देषु संस्कारैर्भवितव्यं, सति च संस्कारे शब्दलाभः इति इतरेतराश्रयं भवति । न च, अविहिताः संस्कारा भवन्ति । यानालोच्य लोकः प्रयुञ्जीत । तस्मान्न लोकाः संस्कृतेषु बर्हिरादीन् प्रयुञ्जते, ततं एकदेशेऽपि जातिनिमित्ता दृष्टाः सर्वत्र जातिनिमित्ता भवितुम् अर्हन्ति । न च, अलौकिकानां सतां वेदादेव पूर्वोत्तरपदसम्बन्धमनपेक्ष्य शक्यतेऽर्थोऽध्यवसातुम् । पूर्वोत्तरपदे अनर्थके माभूताम् इत्येवं स परिकल्पेत, अशक्यस्त्वनवगम्यमानः परिकल्पयितुम्, अर्थवती च ते पदे पूर्वोत्तरे लौकिकेनासंस्कृतप्रयोगेन भविष्यतः । तस्मात् जातिशब्दा एवंजातीयकाः । प्रयोजनं, बर्हिषा यूपावटमवस्तृणाति इति संस्कृतैरेव स्तरितव्यं, यदि पूर्वः पक्षः, विपरीतं सिद्धान्ते । ( १।४। ७अ० )

प्रोक्षण्यादिपदानां यौगिकताधिकरणम् ।

## प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥

प्रोक्षणीरासादय: इति श्रूयते । तत्र प्रोक्षणीशब्दं प्रति सन्देह:, किं संस्कारनिमित्त:, उत जातिनिमित्त:, उत यौगिक: ? इति । तत्र संस्कारेषु सत्सु दर्शनात् संस्कारशब्दतायामवगम्यमानायाम् असंस्कृते शब्दलाभाज्जातिशब्द:, असंस्कृतास्वेवाप्सु प्रोक्षणीभिरुद्देजिता: स्म: इति कस्मिंश्चिद्देशे भवन्ति वक्तार:, तेन जातिशब्द: इति प्राप्ते ।

यौगिक: इत्युच्यते । कुत: ? अर्थसंयोगात् । प्रोक्षण्य: इत्युपसर्गधातुप्रत्ययसमुदायस्य जातिनिमित्तता प्रयोगादनुमीयते, सेचनसंयोगात्तूपसर्गधातुकारणप्रत्ययसहितोऽप्सु प्रवर्त्तते इति प्रसिद्धिरनुगृहीता भविष्यति । यदाऽन्यदपि सेचनं प्रोक्षणशब्देन उच्यते, तदा तत्संयोगादेवाप्सु भविष्यति इति समुदायार्थ: कल्पयितुं शक्यते । तस्मात् यौगिक: । प्रयोजनं, घृतं प्रोक्षणं भवतीति । यदि संस्कारशब्द:, प्रोक्षणीरासादय इति प्रैष: । यदि जातिशब्द:, घृतमासादय इति । यदि यौगिक:, प्रोक्षणमिति । (१।४।८अ०)

---

अथ निर्मन्थ्याशब्दस्य यौगिकत्वाधिकरणम् ।

## तथा निर्मन्थ्ये ॥ १२ ॥

निर्मन्थ्येनेष्टका: पचन्ति इति संस्कृते दर्शनात् संस्कारशब्दो निर्मन्थ्य: इति असंस्कारेऽपि दृश्यते, निर्मन्थ्यमानय, ओदनं पक्ष्याम: इति, निर्मन्थनयोगात् पूर्ववत् यौ-

गिकः इति संस्थितम् । प्रयोजनं, संस्कारनिमित्ते संस्कृतेन इष्टकाः पक्तव्याः, जातिशब्दे यथोपपन्नेन, यौगिके अचिरनिर्मंथितेन यथा नावनीतेन, भुङ्क्ते इत्यचिरनिर्मथितेन इति गम्यते । ( १।४।८ अ० )

---

अथ वैश्वदेवादिशब्दानां नामधेयताधिकरणम् ।

## वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥ (पू०१)

चातुर्मास्येषु प्रथमे पर्वणि वैश्वदेवे सन्देहः, वैश्वदेवेन यजेत इति किं वैश्वदेवशब्दो गुणविधिः, उत कर्मनामधेयम् ? इति । इति यदि सन्देहो न सन्देहः, वैश्वदेवे विकल्पः, गुणविधिर्वैश्वदेवशब्दः, गम्यते हि गुणविधानं, विश्वेदेवा विधीयन्ते आग्नेयादिषु यागेषु, तत्राग्न्यादीनां विश्वेदेवैर्विकल्पः, एवं प्रसिद्धिरर्थवती भविष्यति ।

## न वा, प्रकरणात् प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य ॥ १४ ॥ ( सि० )

नैतदेवम्, प्रत्यक्षश्रुतिविहिता अग्न्यादयः तेषां यागानां, विश्वेदेवा वाक्येन, प्रकरणात्तेनैव नाम्नेन इति गम्यते । न च इयं विषमशिष्टो विकल्पो भवितुमर्हति, न हि प्रकरणं श्रुतस्य द्रव्यस्य बाधने समर्थम् । तस्मात् कर्मनामधेयम् ।

## मिथश्चानर्थसम्बन्धः ॥ १५ ॥ (आ०नि०)

अथोच्येत, वैश्वदेवः इत्यनेन शब्देन प्रत्यक्षम् अग्न्या-

दिगुणविशिष्टो यागगणो लक्ष्यते, वैश्वदेवी हि तत्रामिक्षा समवैति। यदि वैश्वदेवशब्देन यागगणो लक्ष्यते, न तर्हि विश्वे देवा विधीयन्ते, कथं सकृदुच्चरितो वैश्वदेवशब्दो यागगणं लक्षयिष्यति, विश्वांश्च देवान्विधास्यति ? इति नायं वैश्वदेवशब्दस्य विश्वैर्देवैर्मिथ:संबन्धो घटते। तस्मात् कर्मनामधेयमेव, न गुणविधिः इति।

परार्थत्वात् गुणानाम् ॥ १६ ॥ (सि०यु०)

परार्थाश्च गुणाः ते न शक्नुवन्ति प्रधानमावर्त्तयितुम्, तेन सकृद्यागः कर्तव्यः, न गुणानुरोधेनावर्त्तितुमर्हति। सम्प्रतिपन्नदेवतत्वाच्च न विरोधः, तत्रैकस्मात्प्रधानाहुतौ त्रिंशदाहुतयो हूयन्ते इति त्रिंशत्संख्यासम्पत्तिराहवनीयाहुतीनां न भवकल्पते। तस्मात् कर्मनामधेयमिति सिद्धम्। (१।४।१० अ०)

---

वैश्वानरेऽष्टत्वाद्यर्थवादताधिकरणम्।

पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १७ ॥ (पू०)

वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते इति श्रूयते, तत्र यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति इत्येवमादयः कपालविकल्पाः श्रूयन्ते। तेषु सन्देहः, किमष्टत्वादयो गुणविधयः, उतार्थवादाः ? इति। तत्र गुणविधयः इत्येव प्राप्तम्। कथम् ? ये हि पूर्ववन्तो (विदितपूर्व-

मर्थमभिवदन्ति) ते अविधानार्थाः, तदेतत् अस्य वाक्यस्य समाम्नाये सामर्थ्यं, यदविहितपूर्वस्याभिधानम् । किं तत्? विधानसामर्थ्यम् । एवमविहितमर्थं विधास्यति, इतरथा अर्थवादाः सन्तोऽनर्थकाः स्युः । न च, द्वादशकपालस्य शेषभावमुपगन्तुमर्हति । प्रत्यक्षा ह्यष्टानां कपालानां स्तुतिः, परोक्षा द्वादशानाम्, प्रत्यक्षाभावे च परोक्षा स्यात् । तस्मात् गुणविधयः ॥

गुणस्य तु विधानार्थेऽतद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्ताऽस्ति ॥ १८ ॥ (सि०)

नैतदस्ति गुणविधय इति, गुणस्य विधानार्था एते सन्तः पुरोडाशस्य कपालेषु संख्यां विदध्युः, न शक्नुवन्ति यागप्रयोगस्य विधातुम्, द्वादशकपालता हि यागस्य वाक्येन, अष्टाकपालादयः प्रकरणेन, तेन ते यागे न भविष्यन्ति । अपि च अष्टत्वादयः पुरोडाशेनैकवाक्यभूताः प्रकरणं बाधित्वा न यागस्य भविष्यन्ति । यागासम्बन्धे च अनर्थकाः, पुरोडाशसम्बन्धे फलाभावात् । अर्थवादत्वेन तु वैश्वानरयागस्य स्तुतिरुपपद्यते । तस्मात् अर्थवादा इति ।

तच्छेषो नोपपद्यते ॥ १९ ॥ (उ० आभासः)

इति यदुक्तं, तत्परिहर्त्तव्यम् इत्याभाषान्तं सूत्रम् ।

अविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन् ॥२०॥(उ०)

यदा तु अष्टाकपालादिप्ररोचनार्था अनर्थकाः इत्यवगतं, तदा लक्षणया द्वादशकपालस्य स्तुतिर्वैश्वानरयाग-

प्ररोचनार्था भविष्यति। सन्ति हि द्वादशसंख्यायामष्टत्वादयसंख्याविशेषा अविभक्ताः, अतो द्वादशकपालस्य स्तुत्यर्थत्वे वाक्यवस्तुतिरुपपद्यते। यथा शोभनमस्य चक्रस्य नेमितुम्बारं, शोभनमस्याः सेनायाः हस्त्यश्वरथपादातमिति। तस्मात् उपपन्ना स्तुतिः इति।

कारणं स्यात्? इति चेत्॥ २१॥ (आ०)

इति चेत् भवान् पश्यति, अर्थवादाः इति, कारणमष्टत्वादीनां ब्रह्मवर्चसादि कस्मान्न भवति? ब्रह्मवर्चसकामस्याष्टाकपालः, एवमुत्तरेषु यथाकामम्। किमेवं भविष्यति? पुरोडाशस्य गुणविधानेऽप्यानर्थक्यं न भविष्यति, न च लक्षणया द्वादशकपालस्य स्तुतिः कल्पिता भविष्यति। तस्मात् कामेभ्यो विधयो भविष्यन्ति।

आनर्थक्यादकारणं कर्त्तुर्हि कारणानि गुणार्थो हि विधीयते॥ २२॥ (आ०नि०)

यदि कामाय विधयः,भिन्नानि वाक्यानि भवेयुः। एकं चेदं वाक्यं वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते इत्येवमुपक्रान्तं, यत् द्वादशकपालो भवति, जगत्यैवास्मिन्पशून् दधाति, यस्मिन् जाते एतां इष्टिं निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति इत्येवमन्तम्। तस्य मध्येऽष्टत्वादयः श्रूयमाणाः यदि न संबध्येरन् ततो वाक्यान्तराणि भवेयुः। कर्त्तुर्हि कारणानि पूतत्वादीनि भवेयुः। स एष गुणार्थोऽत्र विधीयते वैश्वानरयागे पूत एव इत्येवमादिः। तेन चैतेऽष्टत्वादयः साक्षाद्वैतुल्ये न संब

न्यन्ते, यस्मात् गायत्र्यैवेनं ब्रह्मवर्चसेन पुनाति, तेन पूत एव सः । यस्मात्त्रिवृतैवाऽस्मिं स्तेजो दधाति, तेन तेजस्वी । यस्मात् विराजैवास्मिन्नन्नाद्यं दधाति, तेनान्नादः । यस्मात्त्रिष्टुभैवाऽस्मिन् इन्द्रियं दधाति, तेन इन्द्रियावी । यस्माज्जगत्यैवाऽस्मिन्पशून्दधाति, तेन पशुमान् इति । ततः कामाय विधयोऽसम्भवन्तो यद्यर्थवादा अपि न भवेयुः, आनर्थक्यमेवैषां स्यात् । तस्मात् अकारणं ब्रह्मवर्चसत्वादयोऽष्टत्वादीनाम् तस्मादष्टत्वादयोऽर्थवादाः इति । (१।४ ११ अ० )

---

अथ यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थताधिकरणम् ।

## तत्सिद्धिः ॥ २३ ॥

यजमानः प्रस्तरः यजमान एककपालः इत्यादि समाम्नायते । तत्र सन्देहः, किं यजमानः प्रस्तरः इत्येष गुणविधिः, किमर्थवादः ? इति । तथा यजमान एककपालः इति । किं तावत् प्राप्तम् ? गुणविधिः इति । किमेवं भविष्यति ? एवम् अपूर्वमर्थं विधास्यति । इतरथाऽर्थवादोऽनर्थकः स्यात् । अर्थवत्त्वञ्च न्याय्यं, तस्मात् विधिः ।

नैतदेवं, यदि विधिः स्यात्, प्रस्तरकार्ये यजमानो नियम्येत, यजमानकार्ये वा प्रस्तरः । प्रस्तरे जुहूमासादयति, स्रुवां वा स्रुवः इति यजमाने जुहूरासाद्येत । स्रुवा वा स्रुवः इति । तथा सति न याजमानं शक्यते कर्तुम्, दक्षिणतो ब्रह्मयजमानावासाते कर्मणः क्रियमाणस्य इति ।

न च प्रस्तरो याजमानं शक्नोति कर्तुम्। तथा, यदि यजमान एककपालकार्य्ये विनियुज्येत, सर्वहुतः क्रियेत। तत्र सर्वतन्त्रपरिलोपः स्यात्। न च, एककपालो याज-मानं शक्नोति कर्तुम्। तस्मान्न विधिः। विध्यन्तरं चास्ति, प्रस्तरमुत्तरं बर्हिषः सादयति, एककपालं सर्वहुतं करोति इति। तस्मादपि न विधिः। किं तर्हि? अर्थवादः, यज-मानो स्तूयत एव प्रस्तरः, एककपालः इति च।

कथं पुनरनयोः सामानाधिकरण्यं स्तूयते? न हि प्रस्तर एककपालो वा यजमानः, न च यजमानः एकस्मिन् कपाले संस्कृतः पुरोडाशः, प्रथमो वा कुशमुष्टिर्लूनः। कथं परशब्दः परत्र वर्त्तते? किमर्थं वा स्तूयमानस्य सङ्कीर्त्त-नम्? इति।

उच्यते, स्तूयमानः सङ्कीर्त्त्यते स्तोतुम्, प्रस्तर उत्तरो बर्हिषः सादयितव्यो यजमानत्वात्। तथा यजमान एक-कपालः सर्वहुतः कर्त्तव्यः, स्वर्गे आहवनीयस्तत्र प्रतिष्ठा-पितो भवति इति।

कथं परत्र वर्त्तते परशब्दः? इति। गुणवादस्तु, गुणा-देव वादः। कथमगुणवचनो गुणं ब्रूयात्? स्वार्थभिधानेन इति ब्रूमः, सर्व एवैते गौणाः शब्दाः न स्वार्थं हित्वा गुणेषु वर्त्तन्ते। प्रसिद्धहानिर्हि तथा स्यात्, अप्रसिद्धकल्पना च। न च सर्वे गुणसमुदायवचनाः, गुणहीनेऽपि तथादर्शनात्। अप्रसह्यकार्य्येऽपि हि कदाचिद्रोगेणोपहतः सिंहः पुनः सिंह एव। समुदायवाची च नावयवे प्रवर्त्तितुमर्हति, सर्वसिंहव्यक्तिषु यत् सामान्यं तद्वचनः शब्दः इति स्थितो

न्यायः प्रत्युद्गियेत। न च, असति सिंहे परिकल्पनया प्रवर्त्तेत। कल्पनाया अशक्यत्वात्। कथं नु स्वार्थाभिधानेन प्रत्ययव्यवस्था ? इति चेत्। अर्थसम्बन्धात्, सिंहः इति निर्ज्ञाते प्रसह्यकारिता तत्र प्रायेण इति प्रसह्यकारी इति गम्यते, अर्थप्रत्ययसामर्थ्यात्। यो हि मन्यते, प्रसह्यकारिणं प्रत्याययेयम् इति, स यदि सिंहशब्दमुच्चारयति, सिद्धमस्य स्याभिप्रेतं, सिंहार्थः प्रतीतः प्रसह्यकारी इति सम्बन्धादितरमर्थं प्रत्याययति। एवं स्वार्थाभिधानेन तद्गुणसम्बन्धः प्रतीयते।

इह तु यजमानः प्रस्तरः, यजमान एककपालः इति कीदृशो गुणसम्बन्धः प्रतीयते ? तन्निबिकरः इति, सर्वो ह्यात्मनः कार्य्यसिद्धिं करोति, अन्योऽपि यः तस्य कार्य्यसिद्धिं करोति, स तस्मिन् उच्चरिते हृदयमागच्छति, यथा राजा पत्तिगणकः इति, पत्तिगणको राज्ञः कार्यं साधयति, स राजशब्दे उच्चरिते प्रतीयते, एवमिहापि यजमानकार्यं प्रस्तरैककपालो साधयतः, तो यजमाने प्रतीते प्रतीयेते, तस्मात्तौ यजमानशब्देन प्रत्याय्येते। कथम् ? सुतौ स्यातां बर्हिष उपरिसादने सर्वहोमे च इति। तस्मादेवंजातीयका अर्थवादा न विधयः इति। (१।४।१२अ०)।

---

अथाग्नेयादिशब्दानां ब्राह्मणादिस्तुत्यर्थताधिकरणम्

## जातिः ॥ २४ ॥

आग्नेयो वै ब्राह्मणः, ऐन्द्रो राजन्यः, वैश्यो वैश्वदेवः

इत्येवमादयः श्रूयन्ते। तत्र किं गुणविधयः, अर्थवादाः? इति सन्देहः। गुणविधयः इति ब्रूमः, एवमपूर्वमर्थं विधास्यन्ति, इतरथा अर्थवादाः सन्तोऽनर्थकाः स्युः। न विधिः, विध्यन्तरस्य भावात्, तस्मात् संवादः, तस्य संकीर्तनं विधिस्तुत्यर्थम्। अनाग्नेयादिषु आग्नेयादिशब्दाः केन प्रकारेण? गुणवादेन। को गुणवादः? अग्निसम्बन्धः। कथम्। एकजातीयकत्वात्। किमेकजातीयकत्वम्? प्रजापतिरकामयत, प्रजाः सृजेयम् इति, स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवता अन्वसृज्यत, गायत्रीच्छन्दः, रथन्तरं साम, ब्राह्मणो मनुष्याणाम्, अजः पशूनाम्। तस्मात्ते मुख्याः, मुखतो हि असृज्यन्त। उरसो बाहुभ्यां पञ्चदशं निरमिमीत, तं इन्द्रो देवताऽन्वसृज्यत, त्रिष्टुप्छन्दः, बृहत् साम, राजन्यो मनुष्याणाम् अविः पशूनाम्। तस्मात्ते वीर्यवन्तः, वीर्याद्धि असृज्यन्त। ऊरुभ्यां मध्यतः सप्तदशं निरमिमीत, तं विश्वे देवा देवता अन्वसृज्यन्त, जगती च्छन्दः, वैरूपं साम, वैश्यो मनुष्याणाम्, गावः पशूनाम् एवमुक्ते सति एकस्मिन् एकजातीयके विज्ञाते अन्योऽपि तज्जातीयको हृदयमागच्छति। तस्मादर्थवादशब्दाः। (१।४। १३ अ०)।

---

अथ यूपादिशब्दानां यजमानस्तुत्यर्थताधिकरणम्।

## सारूप्यात् ॥ २५ ॥

यजमानो यूपः, आदित्यो यूपः इत्यादि श्रूयते। तत्र

गुणविधिः, अर्थवादः ? इति सन्देहः । अर्थवत्त्वात् गुण-विधिः । अशक्यत्वात् यूपकार्य्यसाधने यजमानस्य, यजमान-कार्यसाधने वा यूपस्य, विध्यन्तरभावाच्च न विधिः, विधि-स्तुत्यर्थं संवादः । गुणवादात् सामानाधिकरण्यम् । को गुणः ? सारूप्यम् । किं सारूप्यम् ? ऊर्द्ध्वता, तेजस्विता च । तस्मादेवंजातीयका अर्थवादाः । (१।४। १४ ष०) ।

---

अथापश्वादिशब्दानां गवादिप्रशंसार्थताधिकरणम् ।

## प्रशंसा ॥ २६ ॥

अपशवो वा अन्ये गोऽश्वेभ्यः पशवो गो अश्वाः, अयज्ञो वा एष योऽसामा, असत्रं वा एतत् यदच्छन्दोमम् इति श्रूयते । तत्र विध्यर्थवादसन्देहे अर्थवत्त्वाद्विधयः इति प्राप्ते, अभिधीयते, यदि विधयो भवेयुः । गोअश्वा एव पशवः स्युः, सामवानेव यज्ञः, छन्दोमवदेव सत्रम् । अन्येषां पशूनां, यज्ञानां, सत्राणां चोत्पत्तिरनर्थिका स्यात् । विध्य-न्तरञ्च नावकल्पेत । अतः स्तुत्यर्थं संवादः, गोऽश्वान् प्रशं-सितुमन्येषां पशूनां निन्दा, सामवतः प्रशंसितुमसाम्नां निन्दा, छन्दोमवन्ति प्रशंसितुमच्छन्दोमकानि निन्द्यन्ते । यथा, यत् अघृतम्, अभोजनं तत् । यन्मलिनम् अवासस्तत् इति । ( १ । ४ । १५ष० ) ।

---

अथ बाहुल्यं न इष्टिव्यपदेशाधिकरणम् । (भूमाधिकरणम्) ।

## भूमा ॥ २७ ॥

सृष्टीरुपदधाति इति श्रूयते । तत्र गुणविधिः, अर्थ-

वादः ? इति सन्देहे अपूर्वत्वात् विधिः, इति प्राप्ते उच्यते, यदि विधिः, सृष्टिमन्त्रका उपदधातीष्टकाः इत्यर्थः तत्र न इष्टकानां विशेषः कश्चिदाश्रीयते, एवंरूपाः सृष्टिमन्त्रकाः, नैवंरूपाः इति। तत्र सर्वासां सृष्टिलिङ्गा मन्त्राः प्राप्नुयुः। अन्येषामसंयुक्तानां मन्त्राणामानर्थक्यं स्यात्। तस्मात् अनुवादः, मन्त्रसमाम्नानात् प्राप्तानामुपधाने मन्त्राणाम्। सृष्टीनां संकीर्त्तनं सर्जनार्थवादार्थम्। अपि च विधित्वे लक्षणा एकया स्तुवते इत्यत्र या असृष्टयस्ता लक्षयेत्। ननु अनुवादेऽपि लक्षणा। नानुवादपक्षे लक्षणायां दोषः। कथन्तु असृष्टिषु सृष्टिषु च सृष्टिशब्दः इति। भूम्ना, बहवस्तत्र सृष्टिलिङ्गा मन्त्राः, अल्पशो विलिङ्गाः इति। (१।४ १६ अ० )।

---

अथ प्राणभृदादिशब्दानां स्तुत्यर्थताधिकरणम्।

लिङ्गसमवायात् ॥२८॥

प्राणभृत उपदधाति, आज्यानीरुपदधाति इति, विधित्वे प्राणभृन्मन्त्रकासूपधीयमानासु विलिङ्गानां मन्त्राणामानर्थक्यम्। तस्मात् अनुवादः। लिङ्गसमवायात् परशब्दः परत्र वर्त्तते। यथा, छत्रिणो गच्छन्ति इति, एकेन छत्रिणा सर्वे लक्ष्यन्ते। न च अयं प्राणभृच्छब्दः सृष्टिशब्दश्च जहत्स्वार्थं मन्त्रगणं लक्षयेत, यत्रापि च सृष्टिप्राणभृच्छब्दौ समवेतौ, तावपि परिगृह्णीते। यथा, छत्रिशब्देन स्वार्थलक्षणार्थेन सोऽपि छत्री गृह्यते इति। (१।४।१७अ०)

---

अथ वाक्यशेषेण सन्दिग्धार्थनिरूपणाधिकरणम् ।

## सन्दिग्धेषु वाक्यशेषात् ॥ २९ ॥

अक्ताः शर्करा उपदधाति, तेजो वै घृतम् इति श्रूयते । तत्र सन्देहः, किं घृततैलवसानामन्यतमेन द्रव्येणाञ्जनीयाः शर्कराः, उत घृतेनैव ? इति । कथं सन्देहः ? अञ्जनसामान्येन वाक्यस्योपक्रमः, घृतेन विशेषेण निगमनं, यथोपक्रमं निगमयितव्यम् एकस्मिन् वाक्ये । तत्र यदा सामान्यमादौ विशेषोपलक्षणार्थं विवक्ष्यते, यदा निगमने विशेषः सामान्यलक्षणार्थः ? तदारम्भनिगमनयोः किं समञ्जसम् ? इति संशयः । एवं सन्दिग्धेषु उपक्रमे सामान्यवचने विरोधाभावात् न विशेषः परिकल्प्यः, निगमने तु उपजातः सामान्यप्रत्ययः इति विरोधात् लक्षणार्थं घृतवचनम् । यथा छष्टिष्वछष्टिषु च छष्टिशब्दः, एवं घृतमघृतं च घृतम् इत्युच्यते ।

सन्दिग्धेषु एवं प्राप्ते ब्रूमः, सामान्यवचनेन विशेषापेक्षिणा उपक्रमो वाक्यस्य, विशेषे निगमनवशेन । कुतः ? न हि, सामान्यं विहितम् । येन विरोधो निगमनस्य । कथमविहितम् ? सन्दिग्धेषु विधानशब्दाभावात्, न हि विधानशब्दोऽस्ति । अक्ताः शर्करा उपदधाति इति वर्त्तमानकालनिर्देशात् । नापि सामान्यस्य साक्षात् स्तुतिः, प्रत्यक्षन्तु घृतस्य स्तवनम् । श्रुत्या घृतस्य स्तुतिः, लक्षणया सामान्यस्य, श्रुतिश्च लक्षणाया ज्यायसी । तस्मात् घृतविधानम् । एवं वासः परिधत्ते, एतद्वै सर्वदेवत्यं वासः,

यत् चौमम् इति। तथा इमां स्पृष्टोद्गायेत्, इमां हि औदुम्बरीं विश्वाभूतान्युपजीवन्ति इति। (१।४।१८भा०)।

---

अथ सामर्थ्यानुसारेण अव्यवस्थितानां व्यवस्थाधिकरणम्।

## अर्थाद्वा कल्पनैकदेशत्वात् ॥ ३० ॥

स्रुवेणाऽवद्यति, स्वधितिनाऽवद्यति, हस्तेनाऽवद्यति इति श्रूयते। तत्र सन्देहः, किं स्रुवेणावदातव्यं सर्वस्य (द्रवस्य संहतस्य मांसस्य च) तथा स्वधितिना, हस्तेन च उत सर्वेषामर्थतो व्यवस्था (द्रवाणां स्रुवेण, मांसानां स्वधितिना, संहतानां हस्तेन) ? इति। अविशेषाभिधानादव्यवस्था इति।

एवं प्राप्ते ब्रूमः, अर्थाद्वा कल्पना, सामर्थ्यात् कल्पना इति, स्रुवेणावद्येत्, यथा शक्नुयात्। तथा यस्य शक्नुयात् तस्य च इति। आख्यातशब्दानामर्थं ब्रुवतां शक्तिः सहकारिणी, एवं चेत् यथाशक्ति व्यवस्था भवितुमर्हति। तथा अञ्जलिना सक्तून्प्रदाव्ये जुहोति इति, द्विहस्तसंयोगोऽञ्जलिः, स व्याकोशोऽर्थात् कर्त्तव्यः, तथा हि शक्यते होमो निर्वर्त्तयितुम्, तत् यथा, कटे भुङ्क्ते इत्यर्थात् कल्प्यते, कटे समासीनः कांस्यपात्रयामोदनं निधाय भुङ्क्ते इति। (१।४।१८भा०)।

इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये प्रथमाध्यायस्य चतुर्थः पादः। समाप्तोऽयं प्रथमाध्यायः।

---

# द्वितीय अध्याये १ पादः।

अथापूर्वस्याख्यातपदप्रतिपाद्यत्वाधिकरणम्।

## भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥ १ ॥

प्रथमेऽध्याये प्रमाणलक्षणं वृत्तम्, तत्र विध्यर्थवादमन्त्राः, तयस्तत्त्वतो निर्णीताः, गुणविधिर्नामधेयञ्च परीक्षितं सन्दिह्यमानामर्थानां वाक्यशेषादर्थाध्यवसानमुक्तम्। तत्र प्रमाणत्वम्। अनन्तरं प्रधानाप्रधानानि परीक्षिष्यन्ते, भिन्नान्यभिन्नानि च इति, एष एवाऽर्थो वर्णनीयो नान्यः, एष एव चाध्यायसम्बन्धः। तदिह षड्विधः कर्मभेदो वक्ष्यते, शब्दान्तरम्, अभ्यासः, संख्या, गुणः, प्रक्रिया, नामधेयम् इति वक्ष्यमाणमनुसङ्कीर्त्यते। प्रदर्शितमुच्यमानं सुखं ग्राहयिष्यते इति श्रोतुश्च बुद्धिः समाधीयते, तदेतन्नानाकर्मलक्षणम् इत्यध्यायमाचक्षते, एतत्तात्पर्येण अतोऽन्यदुपोद्घातप्रसक्तानुप्रसक्तं च इति।

तत्र प्रथमं तावदिदञ्चिन्त्यते, प्रथमेऽध्याये इदमुक्तम्, चोदनालक्षणोऽर्थो धर्मः इति, चोदना च क्रियाया अभिधायकं वाक्यम्, वाक्ये च पदानामर्थाः, तत्र किं पदेन पदेन धर्म उच्यते, उत सर्वैरेक एव? इति। किं तावत्प्राप्तम्? प्रति पदं धर्म इति।

एवं प्राप्ते उच्यते, यदा एकस्मादपूर्वं, तदाऽन्यत् तदर्थं भविष्यति, एवमल्पीयसी अदृष्टानुमानप्रसङ्गकल्पना भविष्यति। तस्मादेकमपूर्वम्।

यदा एवं, तदा सन्देहः किं, भावशब्देभ्यः, उत द्रव्य-गुणशब्देभ्यः ? इति। (कः पुनर्भावः ? के ते पुनर्भावशब्दाः,? इति। यजतिददातिजुहोति इत्येवमादयः। ननु याग-दानहोमशब्दाः एते, न भावशब्दाः। नैतदेवं यागादि-शब्दाश्च एते भावशब्दाश्च, यज्यात्यर्थश्चातोऽवगम्यते, भाव-येत् इति च ( तथा यतेत, यथा किञ्चित् भवति इति )। तेनैते भावशब्दाः, द्रव्यगुणशब्देभ्यो द्रव्यगुणप्रत्ययो न भाव-नायाः। अतस्ते न भावशब्दाः इति। किं तावत् प्राप्तम् ? अविशेषेण इति।

तत उच्यते, भावार्थाः कर्मशब्दाः, तेभ्यः क्रिया प्रती-येत, यजेत इत्येवमादिभ्यः। कुतः ? भावार्थत्वादेव। य आहुः किमपि भावयेत् इति, ते स्वर्गकामपदसम्बन्धात् स्वर्गं भावयेत् इति ब्रूयुः। तस्मात्तेभ्यः क्रिया प्रतीयेत, फलस्य क्रिया करणं निष्पत्तिरिति। ते च यागदानहोमशब्दाः स्वर्गस्योत्पत्तिं वदन्ति। कुतः ? एष ह्यर्थो विधीयते, यथा, यागादिना स्वर्गकामः केन भावयेत् स्वर्गम् ? यागादिना इति। यस्य च शब्दस्यार्थेन फलं साध्यते, तेनापूर्वं कृत्वा, नान्यथा इति, ततोऽपूर्वं गम्यते, अतो यः तस्य वाचकः शब्दः, ततोऽपूर्वं प्रतीयते इति। तेन भावशब्दा अपूर्वस्य चोदकाः इति ब्रूमः, न तु कश्चिच्छब्दः साक्षादपूर्वस्य वा-चकोऽस्ति। भावार्थैः किमपि भावयितव्यं, स्वर्गकामस्य च केनापि भाव्यता इति, तयोर्नष्टाश्वदग्धरथवत् संप्रयोगः, यजेत इत्येवमादयः साकाङ्क्षाः, यजेत किं केन कथम् ? इति। स्वर्गकामः इत्यनेन प्रयोजनेन निराकाङ्क्षाः। नैव

द्रव्यगुणशब्दाः। तस्मात् भावार्थाः कर्म्मशब्दा अपूर्वं चोदयन्ति इति। अथ कस्मात् उभयं सूचितम्, भावार्थाः कर्म्मशब्दाः इति। उच्यते, भवन्ति केचित् कर्म्मशब्दाः न भावार्थाः, यथा, श्येनैकचिकादयः। केचित् भावार्थाः न कर्म्मशब्दाः, यथा, भवनं भावो भूतिरिति। किं पुनरिहोदाहरणम्? श्येनेनाभिचरन् यजेत, चित्रया यजेत पशुकामः इति। किं श्येनेनाभिचरन् उत यजेताभिचरन् इति? तथा चित्रया पशुकामः, उत पशुकामो यजेत? इति स्थिते एतस्मिन्नधिकरणे गुणविधिः, नामधेयम् इति विचारो भविष्यति। तथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति, दर्शः कालः, पूर्णमासः इति च, किं ताभ्यां स्वर्गकामः, उत स्वर्गकामो यजेत? इति, दर्शपूर्णमासाभ्यामिति च श्येनेनेति च चित्रया इति च नैते भाववचनाः। न च स्वर्गकामशब्देन कश्चित्सम्बन्धोऽस्ति, विभक्तिकत्वात्। तस्मान्न द्रव्यगुणशब्दा अपूर्वस्य विधायकाः इति।

## सर्वेषां भावोऽर्थ इति चेत्॥ २॥ (आ॰)

एवं चेत् भवान् पश्यति, अ-भावशब्दत्वात् न द्रव्यगुणशब्दा अपूर्वस्य विधायकाः इति, सर्वेषां भावोऽर्थः, स्वर्गकामो दर्शपूर्णमासाभ्याम् इत्येतयोः सम्बन्धं यजेत इति वक्ष्यति, श्येनेन अभिचरन् इत्येतयोश्च तथा चित्रया पशुकामः इति। तस्मादेतेऽपि साकाङ्क्षत्वात् भाववचनाः। सर्वेषु भाववचनेषु नास्ति विनिगमनायां हेतुः, कर्म्मशब्दा एवापूर्वस्य विधायकाः, न द्रव्यगुणशब्दाः इति।

**येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात्तेभ्य पराकाङ्क्षा भूतत्वात् स्वे प्रयोगे ॥ ३ ॥ (आ० नि०)।**

येषां शब्दानामुच्चारणोत्पत्तौ स्वे अर्थे प्रयुज्यमानानां रूपमुपलभ्यते, यत् सकृदुत्पन्नं कालान्तरन्तिष्ठति, न क्रियेवोत्पन्नमात्रं विनश्यति इत्यर्थः, तानि नामानि, ते द्रव्यगुणशब्दाः, ईदृशो द्रव्यगुणशब्दानामर्थः। (ते द्रव्यगुण-शब्दाः इति वक्तव्ये तानि नामानि इति सूचितम्, अतो नामानि इति एषां पर्य्यायशब्दः। कथं गम्यते ? यत एषां विभक्तयो नामिकाः उच्यन्ते, कतमास्ताः ? वृषः वृषौ वृषाः, शुक्लः शुक्लौ शुक्लाः इत्येवमादयः। तस्मात् सम्यक् सूचितम्। यत एषां न क्षणिकोऽर्थः, ततः तेभ्यः पराकाङ्क्षा प्रधानाकाङ्क्षा न विद्यते इति नैषाम् उत्पत्तिः कर्त्तव्या, भूतत्वात् स्वे प्रयोगे स्वप्रयोगकाले विद्यमानत्वात् इत्यर्थः।

**येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते, तान्याख्यातानि। तस्मात्तेभ्यः प्रतीयेताश्रितत्वात् प्रयोगस्य ॥ ४ ॥ (आ० नि० २)।**

येषां तु शब्दानामुच्चारणोत्पत्तौ स्वे अर्थे प्रयोगो न विद्यते (प्रयोगकाले येषामर्थो नोपलभ्यते इत्यर्थः), तान्याख्यातानि इति भावशब्दान् पर्य्यायशब्देनोपदिशति। कथं पर्य्यायशब्दता भावशब्दानाम् ? यत एषां विभक्तय आख्या-

तिङः इत्युच्यन्ते। कतमास्ताः? पचति पचतः पचन्ति इत्येवमादयः। तस्मात्तेभ्योऽपूर्वं प्रतीयेत। भव्यार्थास्ते भूतार्थैः समुच्चरिताः। भूतस्य भव्यार्थतायां दृष्टार्थता, भव्यार्थस्य प्रयोजनवत उत्पत्तिरर्थवती, सा च भूतेन क्रियते इति दृष्टोऽर्थः। भव्यस्य पुनर्भूतार्थतायां न किञ्चित् दृश्यते, कल्प्यते चादृष्टम्। तस्मान्न यागो द्रव्यार्थः।

किञ्च आश्रितत्वात् प्रयोगस्य एतेषां प्रयोगः पुरुषेणाश्रितो भवति, पुरुषसम्बद्धा भावना उच्यते, पुरुषं हि वदति भावयेत् इति, तेन स्वर्गकामो यजेत इति पुरुषोऽपि प्रतीयते, यागोऽपि सम्बन्धोऽपि। स्वर्गकामो द्रव्येण इति द्रव्ये प्रतीयते पुरुषय, न तु सम्बन्धः। ननु एतदुक्तम् भवति, अर्थिनश्च द्रव्यस्य च सम्बन्धं यजेत इति वक्ष्यति, द्रव्येण भावयेत् इति। अतो द्रव्येण अर्थस्य भावना गम्येत, आकाङ्क्षा च इति। सत्यं गम्यते, द्रव्येण भावयेत् इति तु वाक्येन, यागेन भावयेत् इति तु श्रुत्या। यदा तु, यागेन भावयेत् इति यागसम्बन्धो विधीयते, न तदा, द्रव्येण भावयेत् इति द्रव्यसम्बन्धः। न च द्रव्यसम्बन्धे विधीयमाने यजेत इत्यनेन सम्बन्धः। अनूद्यमाने तु सम्भवति, न च, यौगपद्येन विध्यनुवादौ सम्भवतः। तस्मात् श्रुतिवाक्ययोर्विरोधः, विरोधे च श्रुतिर्बलीयसी, तेनार्थिना न द्रव्यसम्बन्धः। तत्र द्रव्यमसति स्वर्गकामसम्बन्धे स्वर्गार्थं भविष्यति इत्यनुपपन्नम्, एष विनिगमनायां हेतुः, येन भावशब्दा एवापूर्वस्य चोदकाः, न द्रव्यगुणशब्दाः इति, यदा, यागेन कुर्य्यात् इति, यागवचनमेव भवति। दर्श-

पूर्णमासाभ्याम् इति लक्षणया, दर्शे च पूर्णमासे च यागो विहितः इति। (२।१।१५०)।

---

अथ अपूर्वसाक्षिताधिकरणम्।

कथं पुनरिदमवगम्यते ? अस्ति तदपूर्वम् इति। उच्यते

## चोदना पुनरारम्भः ॥ ५ ॥

चोदनेत्यपूर्वं ब्रूमः, अपूर्वं पुनरस्ति, यत आरम्भः शिष्यते, स्वर्गकामो यजेत इति, इतरथा हि विधानम् अनर्थकं स्यात्, भङ्गित्वात् यागस्य, यदि अन्यदनुत्पाद्य यागो विनश्येत्, फलम् असति निमित्ते न स्यात्। तस्मात् उत्पादयतीति। यदि पुनः ॐ वचनसामर्थ्यात्तदेव न विनश्यति इति कल्पेत। नैवं शक्यम्, न हि कर्मणोऽन्यत् रूपमुपलभामहे, यदाश्रयं देशान्तरं प्रापयति, तत् कर्मेत्युच्यते, न तत् आत्मनि समवेतम्, सर्वगतत्वादात्मनः, सर्वत्र कार्य्योपलब्धः सर्वत्र भावे लिङ्गम्, न तु तदेव देशान्तरादागमनस्य, न हि असति आगमने किञ्चिद्दिङ्गं दृश्यते। यत्र समवेतमासीत्, तद्विनष्टं द्रव्यम्, तस्य विनाशात्तदपि विनष्टम् इत्यवगम्यते। आश्रयोऽप्यविनष्टः इति चेत्। न, भस्मोपलम्भनात्। सत्यपि भस्मन्यस्ति इति चेत् ? न विद्यमानोपलम्भनेऽपि अदर्शनात्। फलक्रिया लिङ्गम् इति चेत्। एवं सत्यदर्शने समाधिर्वक्तव्यः। सौक्ष्म्यादीनामन्यतमद्भविष्यति इति यदि चिन्त्यते, कल्पितमेवं सति किञ्चिद् भवति इति। तथापूर्वं वा कल्पेत, तदा ?

इति । अविशेषकल्पनायामस्ति हेतुः, न विशिष्टकल्पनायाम् । अनाश्रितं कर्म्म भविष्यति इति चेत् । तदपि तादृशमेव । स्वभावान्तरकल्पनेन देशान्तरं न प्रापयिष्यति इति । तादृशमेव । तस्मात् भक्तो यजिः, तस्य भक्तित्वात् अपूर्वमस्ति इति । किं चिन्तायाः प्रयोजनम् ? यदि द्रव्यगुणशब्दाः अप्यपूर्वं चोदयन्ति, द्रव्यगुणापचारे न प्रतिनिधिरुपादातव्यः, यथा तर्हि पूर्वः पक्षः । यथा तर्हि सिद्धान्तः, द्रव्यं गुणं वा प्रतिनिधाय प्रयोगोऽनुष्ठातव्यः इति । ( २ । १ । २ अ० )

---

अथ कर्म्मणां गुणप्रधानभावविभागाधिकरणम् ।

## तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥

अवगतमेतत्, भावशब्दाः कर्म्मणो वाचकाः इति, बहुप्रकाराश्च भावशब्दाः, यजति, जुहोति, ददाति इति, एवम्प्रकाराः, दोग्धि, पिनष्टि, विलापयति इत्येवमादयश्च । तेषु सन्देहः, किं सर्व्वे प्रधानकर्म्मणो विधायकाः, उत केचित् संस्कारकर्म्मणः ? इति । भावार्थत्वाविशेषात् सर्वे प्रधानकर्म्मणो वाचकाः इति प्राप्तम् । ततो ब्रूमः, तानि द्वैधं भवितुमर्हन्तीति द्विप्रकाराणि, कानिचित् प्रधानकर्म्मणो वाचकानि, कानिचित् संस्कारकर्म्मणः । एवमपि सर्वाण्यर्थवन्ति, अर्थवत्त्वे सति सर्वेभ्यः न शक्यमपूर्वं कल्पयितुम् । अतो न सर्वाणि प्रधानकर्म्मणो वाचकानि ।

---

अथ प्रधानकर्मवचनम्।

## यैर्द्रव्यं न चिकीर्ष्यते, तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात् ॥ ७ ॥

एवं सति अल्पीयसी अदृष्टकल्पना न्याय्या, न तु विनिगमनायां हेतुरवगच्छामः, कुतोऽपूर्वम्, कुतो न इति। तदुच्यते, यैर्भावकर्मभिर्न द्रव्यं संस्कर्तुमिष्यते, उत्पादयितुम् वा, तानि प्रधानभूतानि प्रधानकर्मणो वाचकानि, द्रव्यस्य गुणभूतत्वात्। द्रव्यं हि गुणभूतम्, कर्मनिर्वृत्तेरीप्सिततमत्वात्।

—

अथ गुणकर्मवचनम्।

## यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात् ॥ ८ ॥

यैस्तु द्रव्यं चिकीर्ष्यते, गुणस्तत्र प्रतीयेत कर्म। कुतः? तस्य द्रव्यप्रधानत्वात्। प्रत्यक्षं यजेत इत्येवमादिभिर्द्रव्यं न चिकीर्ष्यते, तस्मात्तानि प्रधानकर्मणो वाचकानि, द्रव्यस्य गुणभूतत्वात्। पिनष्टि इत्येवमादिभिर्द्रव्यं संस्क्रियते, तस्मात्तानि गुणकर्मवचनानि। एष एव विनिगमनायां हेतुः। प्रयोजनन्तु पूर्वस्मिन् पक्षे प्रैयङ्गवेऽपि चरौ व्रीहय उत्पाद्या अवघातार्थत्वेन। सिद्धान्ते नोत्पाद्याः। (२। १। २ प०)

—

अथ सम्मार्जनादीनामप्रधानताधिकरणम्।

## धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥ ९ ॥ (पू० १)

स्रुचः संमार्ष्टि, अग्निं संमार्ष्टि, परिधिं संमार्ष्टि, पुरोडाशं पर्य्यग्निकरोति इति श्रूयते। तत्र सन्देहः, किं पर्य्यग्निकरणम्, सम्मार्जनञ्च प्रधानकर्म्म उत गुणकर्म्म? इति। किं तावत् प्राप्तम्? तत उच्यते, कर्म्ममात्रं एवं जातीयकं अपर्य्याप्तं यत् प्रयोजनस्य दृष्टस्य, तद्धर्म्ममात्रम् इति ब्रूमः, तत्र प्रधानकर्म्मत्वं स्यात्। कस्मात्? अनिर्वृत्तेरुपकारस्य, न हि एवंजातीयकं द्रव्यस्योपकारकम्, द्रव्यं त्वेवं जातीयकं अभिनिर्वर्त्तयद् गुणभूतम्। तस्य गुणभूतत्वादिदं प्रधानभूतम्।

## तुल्यश्रुतित्वाद्वा इतरैः सधर्मः स्यात् ॥१०॥ (सि०)

वा शब्दः पक्षं व्यावर्त्तयति। इतरैर्गुणकर्म्मभिः सधर्म्मः स्यादेवं जातीयकः, यथा व्रीहीनवहन्ति, तथा। कुतः? तुल्यश्रुतित्वात्, तुल्या हि द्वितीया श्रुतिरेषां द्रव्येषु, यथा व्रीहीनवहन्ति इति, एवम् अग्निं संमार्ष्टि, पुरोडाशं पर्य्यग्निकरोति इति। किं गुणकर्म्मणि द्रव्ये द्वितीया दृष्टा इति? यतो द्वितीयादर्शनादिहापि सामान्यतो दृष्टेन गुणकर्म्मता। नेति ब्रूमः, द्वितीया विभक्तिः कर्त्तुरीप्सिततमे स्मर्य्यते, सा चेह द्वितीया विभक्तिः, तत एव तदीप्सिततममिति गम्यते, तच्चेदीप्सिततमं, कर्म्म

गुणभूतम्। यद्यपि प्रत्यक्षादिभिर्गुणभावो न गम्यते, प्रमाणान्तरेण शब्देन गम्यते, तस्माद्गुणभूतमेवं जातीयकम् इति।

द्रव्योपदेश इति चेत्॥ ११ ॥ (आ०)

इति चेत् पश्यसि, द्वितीयादर्शनात् प्रधानभूतमत्र द्रव्यमिति। नैतदेवं, गुणभूतेऽपि द्वितीया भवति, तथाहि दृश्यते, सक्तून् जुहोति, मारुतं जुहोति, एककपालं जुहोति इति।

न, तदर्थत्वात् लोकवत्तस्य च शेषभूतत्वात्॥ १२ ॥ ( आ० नि० )

न गुणभूतेऽपि द्वितीया, एवं हि अभियुक्ता उपदिशन्ति, कर्मणि द्वितीया (२।३।२।पा०), कर्तुरीप्सिततमं कर्म (१।४।४९।पा०) इति, न च लोके गुणभूते क्वचित् द्वितीयां पश्यामः। यदपि च तण्डुलानोदनं पचेति, ओदनार्थं तण्डुलान् संस्कुरु इति ईप्सिता एव तण्डुलाः। बल्वजान् शिखण्डकान् कुर्विति, बल्वजा एव तेनाकारेण सम्बद्धा ईप्सिताः इति तत्राभिप्रायः। लौकिकश्च प्रयोगः शब्दार्थपरिच्छेदे हेतुर्न वैदिकः। यत्तु लौकिके जुहोतीति प्रयोगे द्वितीया, शक्यते तत्र वक्तुमीप्सिततमे एव स प्रयोगः इति, तण्डुलानग्नौ जुहुधि, तण्डुलानग्नौ होमेन संबन्धय इति लोके भवति हि बहुप्रकारा विवक्षा। अन्यायश्चानेकार्थत्वं, तेन प्रधानभावेन सिद्धा सती द्वितीया गुणभावेन कल्प्येत। वेदे तु कथं द्वितीया-

निर्दिष्टे गुणभावः इति। द्वितीयानिर्देशात् प्राधान्यमेवावगच्छामः, एवमवगते प्राधान्ये बलीयसा हेतुना नास्ति प्राधान्यम् इत्यवगम्यते। कुतः? न होमस्य केनचित् प्रकारेण सक्त्वर्थताऽवकल्प्यते कुतः? सक्तूनां निष्प्रयोजनत्वात्, न सक्तूनामन्यत्प्रयोजनं दृश्यते श्रूयते वा, यदि वा होमस्तदर्थो होमोऽपि निष्प्रयोजनः, अथारादुपकारको होमः, ततः प्रयोजनवान्, ज्योतिष्टोमप्रकरणे पाठात् गम्यते प्रयोजनवत्ता, नाप्रयोजनः इति शक्यते वक्तुम्, प्रयोगवचनेन हि स आकाङ्क्ष्यते। ननु सक्तूनामपि प्रकरणपाठात् प्रयोजनवत्त्वं भविष्यति। को वा ब्रूते न इति, प्रयोजनवन्तेव, प्रयोजनवत्त्वन्तु होममभिनिर्वर्त्तयताम्, नान्येन प्रकारेण। ननु तेऽपि प्रयोगवचनेनाकाङ्क्ष्यन्ते। तदुच्यते, न द्रव्यं तेनाकाङ्क्ष्यते, इति कर्त्तव्यतां हि स आकाङ्क्षति, होमश्च इतिकर्त्तव्यता, न द्रव्यम्। ननु होमे कृते सक्तुभ्योऽदृष्टं निष्पत्स्यते। नास्त्यत्र प्रमाणम् ननु द्वितीया विभक्तिः प्रमाणम्। न हि द्वितीया विभक्तिर्होमस्य सक्त्वर्थताम् आपयति। न सक्तवः प्रयोजनवन्तः इति भवेत् होमः सक्त्वर्थः, होमसम्बद्धाः सक्तवः स्युरिति, भवन्ति होमे कृते सक्तवो होमसम्बद्धाः। न होमस्य सक्त्वर्थता निष्प्रयोजनेषु सक्तुषु घटते, सक्त्वर्थतावचनन्तु न पुरुषस्योपकारकं न क्रतोः, तदनर्थकमेव स्यात्। यतो न तद्वचनाच्छक्यमन्यतरत् कल्पयितुम्। स एष द्वितीयान्तः सक्तूनां होमस्य च सम्बन्धं करोति, सम्बन्धे च सति द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः इति भूतत्वात्, गुणभावे च तृतीया,

तेनोच्यते, तृतीयायाः स्थाने द्वितीया इति, तेन तदर्थत्वात् होमार्थत्वात् सक्तूनां न प्राधान्यं द्वितीयासंयोगेऽपि। एवं सत्यर्थवद्वचनम्, न चार्थवत्त्वे सति चानर्थक्यम् इत्युच्यते। तस्य च पुरोडाशादेर्यागादिषु शेषभावः, तेन प्रयोजनवन्तः, तत्र संस्कारो नानर्थकः। न स दृष्टोपकाराय इति चेत्। अदृष्टार्थो भविष्यति, अदृष्टोऽपि संस्कारोऽस्ति इति अवगम्यते लोके, यथा ग्रामान्तरादागतानां पुरुषाणां पर्य्यग्निकरणेनादृष्ट उपकारः क्रियते इत्युच्यते। लोके च नानुपपत्तिः।

प्रयोजनं च वरुणप्रघासेषु श्रूयते, शमीमय्यः स्रुचो भवन्ति हिरण्मय्यो वा इति, प्रकृतौ नानावृक्षस्रुक्सम्मार्गसाध्यमपूर्व्वम् इति, नानावृक्षस्रुच उत्पादयितव्याः सम्मार्गार्थत्वेन यथा पूर्व्वपक्षः। यथा तर्हि सिद्धान्तः, शमीमय्य एव हि हिरण्मय्यो वा सम्मार्ष्टव्याः। तथा यत्र वाणवन्तः परिधयस्तत्रापि पालाशा उत्पादयितव्याः पूर्व्वपक्षे। सिद्धान्ते वाणवन्त एव सम्मार्ष्टव्याः। अवभृथे च पूर्व्वपक्षे उत्पादयितव्योऽग्निः सम्मार्गाय, सिद्धान्ते चापः सम्मार्जनीयाः। तथा षट्‌त्रिंशत्संवत्सरेतरसमयाः पुरोडाशाः सवनीयाः इति श्रूयते। तत्रापि पिष्टमयः पुरोडाश उत्पादयितव्यः पर्य्यग्निकरणार्थत्वेन पूर्व्वपक्षे, सिद्धान्ते मांसमया एव पर्य्यग्निकर्त्तव्याः इति (२।१।४प०)।

---

स्तोत्रादिप्राधान्याधिकरणम्।

स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात्॥ १३॥ (पु०)

प्रउगं शंसति, निष्केवल्यं शंसति, आज्यैस्तुवते, पृष्ठैस्तुवते इति गुणवचनं स्तवनं शंसनञ्च, यथा इन्द्रस्य नु वीर्य्याणि प्रवोचम् इति, यदेतद्गुणवचनं श्रूयते, किमेतद्गुणभूतं देवतां प्रति, उत प्रधानम्? इति। तत्रोच्यते, स्तुतशस्त्रे संस्कारकर्म्मणी इति। कुतः? देवताभिधानत्वात्, गुणवचने निर्वर्त्त्यमाने गुणिनो देवता सङ्कीर्त्त्यते, नान्यथा तद्गुणवचनं भवति, तत्र प्रत्यक्षं देवताभिधानं गम्यते, देवताप्रकाशेन च प्रत्यक्ष उपकारो यागसिद्धिः। तस्मात् संस्कारकर्म्मणी याज्यावत् यथा याज्यामन्वाह, पुरोऽनुवाक्यामन्वाह इति स्तुतिवचनं देवताप्रकाशनेनार्थवत्, तद्वदेतदपि इति।

## अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ॥ १४ ॥ (सि०)

यदि संस्कारकर्म्मणी एव स्तोत्रशस्त्रे, अर्थेनापकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात्, देवतार्थस्य गुणभूतो मन्त्र इति तत्प्रधानभावे यत्र प्रधानं तत्र नीयेत, तत्र क्रमसन्निधी उपरुध्येयाताम्। तस्मादेष दुष्टः पक्षः इति पर्य्युदसितव्यः। कतमः पुनरसौ मन्त्रः? अभित्वा शूरेत्येन्द्रः प्रगाथो माहेन्द्रस्य पञ्चयजेः सन्निधावाम्नातो यत्र इन्द्रस्तत्रापकृष्येत।

## वशावद्वा गुणार्थं स्यात् ॥ १५ ॥ (आ०)

न पर्य्युदसिष्यामः इमं पक्षं, संस्कारकर्म्मणी एव स्तोत्रशस्त्रे, देवताभिधानत्वादेव, यत्तूक्तं, प्रगाथस्योत्कर्षः इति,

तत्र, इन्द्रशब्देन महेन्द्रोऽभिधायिष्यते, स एवेन्द्रो महत्त्वेन गुणेन महेन्द्र इत्युच्यते, प्रत्यक्षं हि इन्द्रशब्दं देवतावचनमुपलभामहे, महत्त्ववचनं च महच्छब्दं, यथा राजा महाराजः, ब्राह्मणो महाब्राह्मणः इति, तद्यावत्, यथा सा वा एषा सर्वदेवत्या यदजावशा, वायव्यामालभेत इत्यजावशाशब्देन चोदिते कर्म्मणि छागशब्देन निगमा भवन्ति, तद्वत्सगुणे चोदिते निर्गुणेनाभिधानं भविष्यति। तेन न भविष्यत्युत्कर्षः इति।

न, श्रुतिसमवायित्वात् ॥ १६ ॥

नैतदेवम्, इन्द्रोऽस्य ग्रहस्य देवतेति तद्धितसंयोगेन विज्ञायेत, न चास्य महत्त्वमपेक्षमाणस्य तद्धितसंयोग उपपद्यते, तद्धितसंयोगापेक्षस्य वा महत्त्वसम्बन्धात् समासकल्पना। न च तद्धितार्थे वृत्तस्य महत्त्वसंबन्धः, न च समासार्थे वृत्तस्य तद्धितसम्बन्धः। न चास्मिन्नेव प्रयोगे समासार्थे वृत्तिरिष्यते, एतस्मिन्नेव तद्धितार्थे। न चायमिन्द्रशब्दोऽविहितवत् स्वार्थे तद्धितार्थेन सम्बध्येत, विहितवच्च परार्थं महत्त्वेन संबद्धमनूद्येत। विस्पष्टश्चायमन्योऽर्थो महेन्द्रो भवति, महानिन्द्रो भवतीति महेन्द्रः, अन्यश्चेन्द्रो हविषो देवता भवतीति सकृदुच्चारणे च नोभयं शक्येत। तस्मान्नेन्द्रो देवता महत्त्वविशिष्टः, महेन्द्रशब्दात्तु तद्धित उत्पन्नः, तस्मात्तत्प्रातिपदिकमर्थवदिति गम्यते, न त्ववयवसम्बन्धेन। तस्माद्देवतान्तरमिन्द्रान्महेन्द्रः, तत्रैन्द्रस्य प्रगाथस्योत्कर्षः प्राप्नोति, अतः पर्य्यवसितव्यः एष पक्षः।

यदप्युच्यते, इन्द्रस्य वृत्रवधोत्तरकालं महेन्द्रत्वं दर्शयति, महान् वाऽयमभूत् यो वृत्रमवधीत् इति, तथा वेदस्यादिमत्तादोषः प्रसज्येत अतोऽन्य इन्द्रो महेन्द्रात् ।

व्यपदेशभेदाच्च ॥ १७ ॥ (यु०१)

व्यपदेशभेदश्च भवति, वहुदग्धीन्द्राय देवेभ्यो हविः इति वहुदुग्धि महेन्द्राय देवेभ्यो हविः इति, अतोऽपि देवतान्तरम्, एकदेवतात्वे मन्त्रविकल्पः स्यात् ।

गुणश्चानर्थकः स्यात् ॥ १८ ॥ (यु०२)

यदा विधिशब्दादवगतमेतद्भवति, इन्द्रो देवतेति, तदाऽस्य गुणान्वाख्याने किं प्रयोजनं, महत्त्वं नाम इन्द्रस्य गुणो भवति इति देवताभिधानम् । कथं तस्यै देवतायै दीयते ? इति । गुणेऽपि हि विहिते सति तस्यै एव देवतायै दीयते, अविहितेऽपि । तस्माद् गुणविधानमनर्थकम् । अथोच्येत, योऽस्मिन् यज्ञे इन्द्रः स महान् इति । नैवं, यज्ञसम्बन्धस्याप्रसिद्धत्वात् विशेषणं नात्र कल्पते, गुणसम्बन्धस्य चाप्रसिद्धत्वात् गुणेन विशेषणमनवक्लृप्तम् । तस्मादपि देवतान्तरम् ।

तथा याज्यापुरोरुचोः ॥ १९ ॥ ( यु०३ )

एवं सति याज्यापुरोऽनुवाक्ययोर्भेदेन दर्शनमुपपद्यते ऐन्द्र सानसिं रयिम् इत्यैन्द्रयाज्यापुरोऽनुवाक्याद्वयं, महान् इन्द्रो य ओजसा इति भेदेन माहेन्द्रं दर्शयति, तदेकत्वे विकल्प्येत । तत्र, पदे बाधः स्यात् ।

बाधायामर्थसमवायात् ॥ २० ॥ (उप०)

यदुक्तम्, अजावशाशब्देन चोदिते कर्म्मणि छागशब्देन निगमा भवन्ति इति, तत् युक्तम्, वशायामर्थसमवायित्वं वयं प्रत्यक्षमवगच्छामः, छागस्य वपाया मेदसोऽनुब्रूहि इति यैव वशा यैव छागीति। तस्मात् प्रगाथस्योत्कर्षः संस्कारपक्षे, अतः प्रधानकर्म्मणी इति।

यच्चेति वाऽर्थवत्त्वात् स्यात् ॥ २१ ॥ (आ०)

वाशब्दः पक्षं व्यावर्त्तयति, संस्कारकर्म्मणी एव स्तोत्रशस्त्रे, यच्चेतत्, प्रगाथस्योत्कर्षः इति, उत्कृष्यतां यत्र इन्द्रस्तत्र प्रगाथः, लिङ्गेन हि क्रमसन्निधी बाधितव्यौ एव।

न त्वाम्नातेषु ॥ २२ ॥ (आ० नि०)

अपरेषां मन्त्राणामुत्कृष्टानामन्यथार्थवत्ता नास्ति, तेषामानर्थक्यं स्यात्, यथा, याम्याः शंसन्ति, शिपिविष्टवतीं पितृदेवत्याम् आग्निमारुते, कुसुभकसूक्तम्, अश्वसूक्तं, मूषिकासूक्तमित्येवमादीनाम्।

दृश्यते ॥ २३ ॥ (आ०)

तदुच्यते, सर्वेषामर्थवत्ताऽस्ति, मण्डूकसूक्तस्याग्नौ, अश्वसूक्तस्य राजसूये, मूषिकासूक्तस्यैकादशिन्यां, सर्वेषां वाचस्तोमे, सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाचस्तोमे, पारिप्लवम् अश्वमेधे शंसति इति, यथा यस्याग्निन्ने शस्यमाने सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयात् इति, तस्मादस्त्यर्थवत्ता उत्कृष्टानाम्। अतः संस्कारकर्म्मणी स्तोत्रशस्त्रे इति।

अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥ २४ ॥ (आ० नि०)

तन्निविष्टाश्च ये मनुष्याः, तैरन्यत् सर्वप्राणिनाम् धारण-विक्रमणादि यत् भूमिकृतं, तद्विशिष्टं प्रति न कश्चिद्वि-शेषः। तस्मात् न भूमिर्देया। (६। ७। २ अ०)

—०—

विश्वजिति अश्वादीनामदेयताधिकरणम्।

## अकार्य्यत्वाच्च ततः पुनर्विशेषः स्यात् ॥ ४ ॥

विश्वजित्येव सन्देहः किम् अश्वादयो देयाः, न? इति। किं प्राप्तम्? सर्वस्य विहितत्वात्, देया अश्वाः इति। एवं प्राप्ते ब्रूमः, यस्य च दानम् अकार्य्यं, तच्च न देयम्, यथा अश्वानाम्। तेषां हि दानम् अकार्य्यम्। एष हि विशेषः अश्वानाम्, अन्येभ्यो द्रव्येभ्यः, यत् एषां दानं प्रतिषिध्यते, न केसरिणो ददाति न उभयतोदतः प्रति-गृह्णाति इति विश्वजिति एव समाम्नायते। तस्मात् न अश्वा देयाः इति। (६। ७। ३ अ०)।

——

विश्वजिति विद्यमानानामेव सर्वस्वानाम् दानाधिकरणम्।

## नित्यत्वाच्चानित्यैर्नास्ति सम्बन्धः ॥ ५ ॥

विश्वजित्येव सन्देहः सर्वस्वं ददाति इति, किम् अर्ज्जयित्वा उपकरणानि यावन्ति मनुष्यस्य,यावन्ति च शक्नोति उपार्ज्जयितुम्, सर्वाणि तानि दद्यात्-शतभाण्डादीनि, उत यान्येव अस्य विद्यन्ते, तानि सर्वाणि देयानि, न अविद्य-

मानानि कर्त्तव्यानि? इति। कुतः संशयः?। उभयथा वचनव्यक्तेः सम्भवात्, यदि वा एवं वचनं व्यज्यते, यानि सर्वाणि स्वानि, कानि तानि? यानि पुरुषस्य उपकारकाणि शयनादीनि, तानि सर्वाणि दद्यात् इति विधीयते, यद्वा यानि स्वानि पुरुषस्य दाने शक्यानि, तानि सर्वाणि इति सर्वत्वं विधीयते। यदि दानं विधीयते, ततोऽप्राप्तदानानाम् क्रतभाण्डकानामपि दानम्। अथ सर्वता विधीयते, ततो विद्यमानानामेव।

किं तावत् प्राप्तम्? क्रतभाण्डकानि देयानि इति, तथा दानविधाने श्रुतिः अनुग्रहीष्यते, इतरथा वाक्यं। तयोश्च श्रुतिर्बलीयसी। तस्मात् क्रतभाण्डकानि देयानि इति।

एवं प्राप्ते ब्रूमः, नित्यत्वाच्च अनित्यैर्नास्ति सम्बन्धः, चशब्दोऽन्वादेशे, न अश्वा दातव्याः इत्युक्तं, क्रतभाण्डकानि च न देयानि इति। नित्यं हि विश्वजिति दानं चोदकेन प्राप्तम् अनूद्यते, अनित्यानि च क्रतभाण्डकानि, न शक्यानि सर्वाणि विश्वजिति क्रियमाणे उपसंहर्त्तुम्। तत्र क्रतभाण्डकानाम् केषाञ्चित् उत्पत्तिं विश्वजिति दानं प्रतीक्षेत, नैमित्तिकं तत् स्यात्, न नित्यं, नित्यवच्च तत् चोदकेन विधीयते, न निमित्तसंयोगेन। तस्मात् अवश्यमेतदभ्युपगन्तव्यं, साकल्यं देयानाम् प्राप्तानाम् विधीयते इति, श्रुत्यसम्भवे च वाक्यार्थो ग्रहीतव्य एव भवति, तस्मात् न क्रतभाण्डकानि दातव्यानि। (६। ७। ४ अ०)

---

विश्वजिति धर्म्मार्थसेवकशूद्रस्यादेयताधिकरणम् ।

## शूद्रस्य धर्मशास्त्रत्वात् ॥ ६ ॥

विश्वजित्येव सन्दिह्यते, किं परिचारकः शूद्रो देयः, न ? इति । किं प्राप्तम् ? सर्वस्य स्वस्य विहितत्वाद्देयः इति एवं प्राप्ते ब्रूमः, शूद्रस्य न देयः इत्यन्वादेशः । कुतः ? । धर्म्मशास्त्रत्वात्, धर्म्मशासनोपनतत्वात् तस्य, एवम् असौ तस्मै नैवर्णिकाय उपनत इमं शुश्रूषमाणो धर्मेण सम्भं-त्स्यते इति, सोऽन्यस्मै दीयमाणो न इच्छेदपि, न च अनिच्छतः तस्य स प्रभवति, न च बलात् स्वीकर्त्तव्यः, यस्त्वन्यायेन स्वीकुर्य्यात्, स दद्यादपि । धर्म्मोपनतमात्रेण तु न शक्यो दातुम् । (६ । ७ । ५ अ०) ।



विश्वजिति दक्षिणाकाले विद्यमानानामेव सर्वस्वानाम् देयताधिकरणम् ।

## दक्षिणाकाले यत्स्वं तत्प्रतीयेत तद्दान-संयोगात् ॥ ७ ॥

विश्वजित्येव सन्देहः, किं प्राग्दक्षिणाकालात्, विद्य-मानं नियोगतो दक्षिणाकाले निधातव्यम्, ऊर्द्ध्वं च दक्षिणाकालात् भविष्यत् अनागतमपि दक्षिणाकाले देयम् । उत यदेव दक्षिणाकाले विद्यते, तदेव देयम् ? इति । किं प्राप्तम् ? यस्यापि प्रागूर्द्ध्वं च स्वता, तदपि देयं स्वमात्रस्य दानविधानात् । एवं प्राप्ते ब्रूमः, दक्षिणाकाले

यत् स्वं विद्यते, तत् एव देयं, न यत् प्रागूर्द्धं च कुतः ? । स्वस्य अत्र दानम् अनूद्य साकल्यं विधीयते, तच्च दानं दक्षिणाकाले प्राप्तत्वात् तस्मिन्नेव कालेऽनूद्यते । तस्मात् दक्षिणाकाल एव विद्यमानं देयम् इति । ( ६।७।६ अ० ) ।

---

विश्वजिति दक्षिणादानोत्तराङ्गानामनुष्ठानाधिकरणम् ।

## अशेषत्वात्तदन्तः स्यात् कर्म्मणो द्रव्यसिद्धित्वात् ॥ ८ ॥ (१म पू०)

तस्मिन्नेव विश्वजिति सन्देहः, किं दक्षिणाकाले एव विश्वजित् उत्स्रष्टव्यः, उत न सर्वं दातव्यं, परिसमापनीयः ? इति । किं प्राप्तम् ? उत्स्रष्टव्यः इति । कुतः ? । अशेषत्वात् । कथम् अशेषता ? । विश्वजिति सर्वस्वं ददाति इति, न च शक्यम् अन्तरेण द्रव्यं, परिसमापयितुम् । तस्मात् तदन्तः स्यात् ।

## अपि वा शेषकर्म स्यात् क्रतोः प्रत्यक्षशिष्टत्वात् ॥ ९ ॥ (२य पू०)

अपि वा इति पक्षव्यावृत्तिः । शेषकर्म्म स्यात्, न सर्वस्वं दक्षिणाकाले देयं, यावता तत् कर्म परिसमाप्यते, तावत् शेषयितव्यम् । कुतः ? । क्रतोः प्रत्यक्षशिष्टत्वात्, क्रतोः परिसमाप्तिः प्रत्यक्षशिष्टा, विश्वजिता यजेत इति विश्वजितम् उपक्रम्य, परिसमापयेत् इत्यर्थः । परिसमा-

पर्यता यत् शक्यते दातुम्, तावत् सर्वम् इत्यर्थः। तस्मात् न तदन्तम् उत्स्रष्टव्यम् इति।

**तथा चान्यार्थदर्शनम् ॥ १० ॥ (यु०)**

एवञ्च कृत्वा अन्यार्थदर्शनम् उपपद्यते, अवभृथादुदेत्य वत्सत्वचमाच्छादयति इति शेषे इति अवकल्पते।

**अशेषं तु समञ्जसादानेन शेषकर्म स्यात् ॥ ११ ॥ (आ०)**

तुशब्दः पक्षं व्यावर्त्तयति। एतत् समञ्जसमाभूतं, यत् अशेषं प्रदीयते इति, एवं सर्वस्वं ददाति इति शब्दः उपपन्नो भवति इति। यत्तु प्रत्यक्षा समाप्तिः इति तत्र ब्रूमः, आदानेन शेषकर्म्म भविष्यति इति। उच्यते,

**नादानस्य नित्यत्वात् ॥ १२ ॥ (आ० नि०)**

आदानं त्वनित्यं, नित्यं च शेषकर्म, न हि तयोः सम्बन्धोऽवकल्पते। तस्मात् शेषयितव्यं किञ्चित् इति।

**दीक्षासु तु विनिर्देशादक्रत्वर्थेन संयोगस्तस्माद-विरोधः स्यात् ॥ १३ ॥ (सि०)**

तुशब्दः पक्षं व्यावर्त्तयति, नैतदस्ति, किञ्चित् शेषयितव्यम् इति। दीक्षासु तु विनिर्देशो भवति, प्रकृतौ एव ज्योतिष्टोमे। स इह चोदकेन प्राप्तः, इदं क्रत्वर्थम् इदं भक्ष्यार्थम्, इदम् आनमनाय इति, तदिह यत् आनमनाय

दातव्यं, तस्य अयं विकारः सर्वता नाम। कुत एतत्?। यतः स्वं ददाति इत्यनूद्यते, सर्वता एव विधीयते तेन, न अदातव्यस्य दानं विधीयते, न च भत्यार्थं क्रत्वर्थं च दातव्यम्। तस्मात् अविरोधो भविष्यति इति। (६।७। ७ अ०)।

---

अहर्गणस्य ऽपि विश्वजिति सर्व्वस्व दानाधिकरणम्।

## अहर्गणे च तद्धर्मा स्यात् सर्वेषामविशेषात्॥ १४॥(सि०)

अस्ति अहर्गणः अष्टरात्रः, अथ एतस्य अष्टरात्रस्य विश्वजिदभिजितौ एकाहावभितः, उभयतो ज्योतिर्मध्ये षडहः, पशुकामो हि एतेन यजेत इति। तत्र सन्देहः, किम् अहर्गणस्यस्यापि सर्वस्वमेव दक्षिणा स्यात्, आहो द्वादशं शतम्? इति। किं प्राप्तम्? सर्वस्वम्। कुतः?। सर्वेषां विश्वजिताम् अविशेषात्, य एव प्रकृतौ विश्वजितो धर्म्मः, स एव चास्य चोदकेन भविष्यति। तस्मात् सर्वस्वं देयम् इति।

## द्वादशशतं वा प्रकृतिवत्॥ १५॥ (पू०)

द्वादशशतं वा देयम् इति। प्रकृतिवत् कर्त्तव्यं, ज्योतिष्टोमश्च प्रकृतिः, तत्र धर्मा विहिताः, न विश्वजिति कृत्स्नाः प्रतीयन्ते। तस्मात् द्वादशशतम् अत्र देयम् इति।

अतद्गुणत्वात्तु नैवं स्यात् ॥ १६ ॥ (उ०)

तुशब्दः पक्षं व्यावर्त्तयति। नैवं भवितुमर्हति। कुतः ?। नैव यतो विश्वजितो गुणो द्वादशशतम्। नामधेयेन हि अत्र धर्मोपदेशम्। तस्मात् विश्वजितो भविष्यति, न ज्योतिष्टोमात् इति।

लिङ्गदर्शनाच्च ॥ १७ ॥ (यु०)

लिङ्गं खल्वपि दर्शयति। किं लिङ्गं भवति ? इति। एवमाह, छीयते वा एष पशुभिर्यो विश्वजिति सर्वं न ददाति इति नियतं सर्वस्वदानं दर्शयति अहर्गणे। (६।७।८ अ०)।

विश्वजिति द्वादशशतस्य न्यूनधनस्यानधिकाराधिकरणम्।

विकारः सन्नुभयतोऽविशेषात् ॥ १८ ॥ (पू०)

विश्वजिति सर्वस्वं ददाति इति। तत्र एषोऽर्थः सांशयिकः, किं यस्य द्वादशशतम्, अधिकम्, ऊनं वा क्रियते, तस्यापि विश्वजिता अधिकारः, उत यस्य सकलमधिकं वा तस्यैव ? इति। किं प्राप्तम् ? विकारः सन्नुभयतोऽविशेषात्, न विशेषः कश्चिदाश्रीयते, यस्य द्वादशशतम् अधिकम्, ऊनं वा अस्ति इति। तस्मात् सर्वस्य विश्वजिता अधिकारः इति।

अधिकं वा प्रतिप्रसवात् ॥ १९ ॥ (सि०)

न चैतदस्ति, सर्वस्य विश्वजिता अधिकारः इति। कस्य तर्हि ? यस्य द्वादशशतमस्ति, अधिकं वा इति। कुतः ? । प्रतिप्रसवात्, प्रतिप्रसवो हि ज्योतिष्टोमे सर्वस्वस्य उच्यते, द्वादशशतं विधाय आह, एतावता वाव ऋत्विज आनेया अपि वा सर्वस्वेन इति, यदि एतावता नेच्छेयुः, सर्वस्वेनाप्यानमयितव्याः इति। तद्यदि द्वादशेन शतेन न इच्छन्ति, न इच्छन्तितरां ततो न्यूनेन। तस्मात् द्वादश-शतं ज्योतिष्टोमे। यद्वा सर्वस्वं, तदिह उभयमपि प्राप्तं, तत्र एकः पक्षो नियम्यते, सर्वस्वं देयम् इति। स एष न विधिः, प्राप्तत्वात्। अनियतप्राप्तस्तु नियम्यते, स चेत् नि-यम्यते, यादृशस्तत्र, तादृश एव इह। तत्र च द्वादशशतम् अधिकं वा सर्वस्वम्। इहापि तद्वदेव। तस्मात् न न्यून-धनस्य अधिकारः इति।

## अनुग्रहाच्च पादवत् ॥ २० ॥ (यु०)

चशब्देन अन्वाचयः। इतश्च अधिकं सर्वस्वं, अधिके हि दीयमाने तदन्तर्गतत्वात् द्वादशशतमपि दत्तं भवति, पादवत्, यथा, कार्षापणे दीयमाने पादोऽपि दत्तो भवति, एवम् इहापि इति। (६।७।८ अ०)।

---

आधानेऽपरिमितं देयमित्यनेन सङ्ख्यान्तरविधानाधिकरणम्।

## अपरिमिते शिष्टस्य सङ्ख्याप्रतिषेधस्तच्छ्रुति-त्वात् ॥ २१ ॥ (पू०)

आधाने श्रूयते, एका देया षड् देयाः द्वादश देयाश्चतु-र्विंशतिर्देयाः शतं देयं सहस्रं देयं अपरिमितं देयम् इति। तत्र सन्देहः, किं, यत् परिमितम् एका देया इत्येवमादि, तत्र दातव्यम् इति प्रतिषेधो विधीयते, उत अपरिमितं नाम किञ्चित् तस्य दानं विधीयते ? इति। किं प्राप्तम् ? अपरिमिते, श्रूयमाणे ब्रूमः, शिष्टस्य एकादेः सङ्ख्येयस्य या सङ्ख्या, सा प्रतिषिध्यते। कुतः ?। तच्छ्रुतित्वात् परिमितशब्दश्रवणात् गणितम् अवगम्यते, तत्र एकादिकं, तस्य नञ्शब्देन प्रतिषेधः क्रियते, तत्र श्रुतोऽर्थः कृतो भवति इतरथा अपरिमितशब्दे प्रसिद्धिस्तज्येत, लक्षणया बहुत्वम् अस्यार्थः कल्पेत। तस्मात् परिमितस्य प्रतिषेधः इति।

## कल्पान्तरं वा तुल्यवत्प्रसङ्ख्यानात् ॥ २२ ॥ (सि०)

कल्पान्तरं वा स्यात्, अपरो दानकल्पो विधीयते, यथा एका देया इति दानविधिकल्पः, एवम् एषोऽपि दानविधि-कल्प एव स्यात्, तेन हि पूर्वेण, तुल्यमेव इदं प्रसङ्ख्या-यते। का अस्य पूर्वेण तुल्यता ?। प्रतिज्ञातस्य अर्थस्य अवगमिका श्रुतिरस्ति इति। पूर्वत्र हि देयशब्दश्रुत्या दानं विधीयते इति, इहापि देयशब्दश्रुतिः, सा श्रूयमाणा शक्नोति दानं विधातुम्। प्रतिषेधे हि विधीयमाने वाक्यस्य व्यापारः। तच्च दुर्बलं श्रुतिं प्रति। तस्मात् कल्पान्तरम्। यच्च अपरिमितशब्दे प्रसिद्धिर्बाध्यते इति, समुदायप्रसिद्धिरवयवप्रसिद्धेर्बाधिकैव समधिगता।

ननु नात्र प्रसिद्धिः, लक्षणेयं, यत् बहु, तत् न शक्यं परिमातुम्। तस्मात् अपरिमितत्वेन लक्ष्यते बहुत्वम् इति। तच्च न अनेकस्मिन् अशक्यपरिमाणे सति बहुषु रूढ़ः, अपरिमितम् अस्य धनं, बहु इति गम्यते। यथा, कुशलः, प्रवीणः इति बहुषु कुशानां लातुर्गुणेषु सत्सु निपुणतायामेव कुशलशब्दो रोहाद्रूढ़िशब्द एव भवति, बहुषु च वीणावादस्य गुणेषु सत्सु निपुण एव प्रवीणशब्दो वर्त्तमानो रूढ़ः इत्युच्यते। तस्मात् सत्यपि लक्षणावे श्रुतिसामर्थ्यात् रोहति शब्दः। तस्मात् समुदायप्रसिद्ध्या अपरिमितशब्देऽवयवप्रसिद्धिर्बाध्यते, अश्वकर्णशब्दवत्। अतः कल्पान्तरम् इति। (६।७।१० अ०)।

—:※:—

अपरिमितशब्देन सहस्राधिकस्य ग्रहणाधिकरणम्।

## अनियमोऽविशेषात् ॥ २३ ॥ (पू०)

अपरिमिते कल्पान्तरम् इति समधिगतम्। अथ इदानीं सन्दिह्यते, किं सहस्रात् ऊनम् अपरिमितम्, उत सहस्रात् अधिकम्? इति। किं तावत् प्राप्तम्? अनियमोऽविशेषात्, न कश्चित् इह बहुत्वे विशेषं आश्रीयते, सहस्रादूनम् अधिकं वा इति, अनाश्रीयमाणे यथा कृतं तथा साधु। तस्मात् अनियमः।

## अधिकं वा स्याद्बह्वर्थत्वादितरेषां सन्निधानात् ॥ २४ ॥

वा इतिपक्षव्यावृत्तिः, नैतदस्ति, अधिकम् ऊनं वा सहस्रात् इति। किं तर्हि? अधिकम् एव इति। कुतः?। बह्वर्थत्वात् अपरिमितशब्दस्य, बहुषु हि इमं शब्दम् उपचरन्ति, इत्येतत् उक्तं, बहुत्वं च आपेक्षिकं, किञ्चित् अपेक्ष्य ततोऽधिकं बहु इत्युच्यते। असत्याम् अपेक्षायाम् अपरिपूर्णमेतत्, यथा पुत्रः इति किञ्चित् अपेक्ष्य भवति, न अन्यथा, तत्र प्रकृतं सन्निहितं च अपेक्ष्य निर्णयः। सहस्रं च सन्निहितम्। तस्मात् ततोऽधिकम् अपरिमितम् इति।

**अर्थवादश्च तद्वत्॥ २५॥ (यु०)**

कथम् एवम्?। तत्र उत्कृष्टं वै अपरिमितम् इति तदूनतां सहस्रस्य दर्शयति। (६।७।११ अ०)।

---

इति हकर्मेत्यादि परकृतिपुराकल्पानामर्थवादताधिकरणम्।

**परकृति-पुराकल्पं च मनुष्यधर्मः स्यादर्थाय ह्यनुकीर्त्तनम्॥ २६॥ (१म पू०)**

इह परकृतयः पुराकल्पाश्च उदाहरणम्। यथा, इति ह स्माह बर्कुर्वार्ष्णिर्माषान्मे पचत न वा एतेषां हविर्गृह्णन्ति इति। पुराकल्पः उल्मुकैर्ह स्म पूर्वे समाजग्मुस्तान् ह असुरा रक्षांसि निर्जघ्नुः इत्येवमादयः। तेषु सन्देहः, किम् एते मनुष्यधर्मा विधयः, उत तद्विज्ञानाम्। अथ वा अर्थवादाः? इति। किं तावत् प्राप्तम्? मनुष्य-

धर्मो विधयः इति। कुतः?। अर्थाय प्रयोजनाय अनुकीर्त्तनम् एतत् भवति, कर्ह मनुष्यसम्बन्धकीर्त्तनेन क्रिया प्रशस्ता भवति, प्रशस्तं च प्रतिपाद्यम्। स एष विधिरेव, अनेन प्रकारेण अतः परैरपि मनुष्यैः कर्त्तव्यः इति गम्यते।

## तद्युक्ते च प्रतिषेधात् ॥ २७ ॥

एवञ्जातीयकस्य विधेः प्रतिषेधो भवति, तद् तथा न कुर्य्यात् इति, प्रसक्तस्य च प्रतिषेधो न्याय्यः। तस्मात् अपि विधयः इति।

## निर्द्देशाद्वा तद्धर्मः स्यात् पञ्चावत्तवत् ॥ २८ ॥

(२य पू०)

मनुष्यधर्मोऽयं विधिः एवञ्जातीयकः इति गम्यते, तत्र तु विशिष्टगोत्राणां निर्द्देशात् तेषामेव धर्मः इति गम्यते। स्तुत्या हि अयं कर्त्तव्यः इति ज्ञायते, स च विशिष्टगोत्राणां श्रूयते, तस्मात् तद्गोत्राणामेव कर्त्तव्यः। पञ्चावत्तवत्, यथा, पञ्चावत्तं जमदग्नीनाम् इति तद्गोत्राणामेव भवति, एवम् इहापि इति।

## विधौ तु वेदसंयोगादुपदेशः स्यात् ॥ २९ ॥

(३य पू०)

तुशब्दात् एषोऽपि पक्षो व्यावर्त्तते, विधौ एतेषाम् उपदेशः स्यात्, विधौ वेदेन श्रुतिनिर्द्देशः कृतः, न विध्याश्रये

पुरुषे, पुरुषग्रहणं विधिप्रशंसार्थम्। विति: इति क्रिया-
माह। एतस्याः क्रियाया भावो यस्मात् अनेन पुरुषेण
क्रियते तस्मात् साधुरिति। न तु अत्र पुरुषः क्रियासम्ब-
न्धेन निर्दिश्यते, किन्तु स्तोतव्यत्वेन। कुतः एतत्?।
स्तुतिपदस्य अन्यस्य अभावात्। अपि च क्रियानिर्देशे
श्रुत्या विधानं, क्रियापुरुषसम्बन्धनिर्देशे वाक्येन अतश्च
दुर्बलम्। तस्मात् पुरुषमात्रस्य विधानं प्राप्नोति, न
तद्गोत्राणाम् इति।

## अर्थवादो वा विधिशेषत्वात्तस्मात् नित्यानु-वादः स्यात् ॥ ३० ॥ (सि०)

एषोऽपि पक्षो वाशब्दात् विनिवृत्तः। नायं तद्गो-
त्राणां विधिः न मनुष्यमात्रस्य वा विधिः, विधिरेव वा
इति, अयं अर्थवादस्तु। कुतः?। विधिशेषत्वात् अन्यं
त्वत्र विधिमामनन्ति, परकृत्युदाहरणे तावत्, तस्मादा-
रण्यमेवाश्नीयात् इति, पुराकल्पोदाहरणे, गृहपतेरेवा-
ग्निषु निर्मथ्य निर्वपेरन् इति। न च द्वयोर्विध्योरेकवाक्य-
भावोऽस्ति, विधिना हि सम्बध्यमानयोः परकृति पुरा-
कल्पवचनयोः अन्या वचनव्यक्तिः, अन्या तु स्तुत्यर्थप्रवृ-
त्तयोः। न च उभयं यौगपद्येन सम्भवति। तस्मात् अर्थ-
वादः इति (६।७।१२ भा०)।

---

सहस्रसंवत्सरशब्दस्य सहस्रदिनपरताधिकरणम् ।

## सहस्रसंवत्सरं तदायुषामसम्भवात् मनुष्येषु ॥ ३१ ॥ (१म पू०)

अस्ति सहस्रसंवत्सरम्, पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः, पञ्चपञ्चाशतः पञ्चदशाः, पञ्चपञ्चाशतः सप्तदशाः, पञ्चपञ्चाशत एकविंशा विश्वसृजामयनं सहस्रसंवत्सरम् इति । तत्र सन्देहः, किं ये सहस्रायुषः, तेषाम् अनेन अधिकारः, उत मनुष्याणाम् ? इति यदापि मनुष्याणां, तदापि बह्वो विकल्पाः वक्ष्यमाणाः, अथ वा दिवसेषु संवत्सरशब्दः ? इति । किं प्राप्तम् ? सहस्रायुषां भवितुमर्हति । कुतः ? । असम्भवात् मनुष्येषु, न मनुष्याणाम् एतावदायुर्विद्यते, गन्धर्वादयस्त्वेतावदायुषः इति भवति स्मृतिः उपचाराऽन्यार्थदर्शनं च । प्रजापतिं वै प्रजाः सृजमानं पाप्मा मृत्युरभिजघान स तपोऽतप्यत सहस्रसंवत्सरान् पाप्मानं विजिहासन् इति, विसृष्टं चेदं सहस्रसंवत्सरम् । तस्मात् न मनुष्याणाम् इति ।

## अपि वा तदधिकारान्मनुष्यधर्मः स्यात् ॥३२॥ (२य पू०)

अपि वा इति पक्षव्यावृत्तिः, न गन्धर्वादीनां, मनुष्याणामेव अधिकारः इति । कुतः ? । तदधिकारात्, मनुष्याधिकारं शास्त्रं समधिगतम् इति, ते हि शक्नुवन्ति कात्स्न्येन यथोदितं विधिम् उपसंहर्त्तुम् इति । आह,

ननु नैतावदायुषो मनुष्याः। उच्यते, रसायनैः आयुर्दीर्घं प्राप्स्यन्ति इति।

## नासामर्थ्यात् ॥ ३३ ॥ (२य पू॰ नि॰ १)

न रसायनानामेतत् सामर्थ्यं दृष्टं, येन सहस्रसंवत्सरं जीवेयुः। एतानि हि पक्ववर्द्धकानि, वलीपलितस्य नाशकानि स्वरवर्णप्रसादकानि, मेधाजननानि। नैतावदायुषां दातॄणि दृश्यन्ते। ननु स्वरवर्णप्रसादादिदर्शनादेव ज्योग्जीवनमप्यनुमास्यते। न इति ब्रूमः। कुतः ?। शतायुर्वै पुरुषः इत्यनुवादः, स एवं ज्योग्जीवे न अवकल्पते। अत्र उच्यते, शतान्यायुरस्य इति विग्रहीष्यामः। नैवं सङ्ख्याशब्दानां समास इष्यते, न च गमकानि भवन्ति, द्विवचनबहुवचनान्तानामसमासः इति चाभियुक्तवचनात्।

## सम्बन्धादर्शनात् ॥ ३४ ॥ (२य पू॰ नि॰ २)

न हि एतावदायुषा रसायनानां सम्बन्धो दृष्टपूर्वः, न च सम्बन्धादर्शनेऽनुमानमस्ति। ननु सामान्यतो दृष्टं भविष्यति, दृश्यन्ते तावत् अल्पस्य स्थिरभावस्य कारकाणि एवम् अभ्यस्यमानानि वीर्यवत्तमानि स्थिरशरीरताम् उत्पादयिष्यन्ति, शतायुः पुरुषः इति सत्यपि वचने, अधिकं जीवनं दृश्यते एव इति। अत्र उच्यते, न अयम् एकान्तः, कदाचित् याश्च यावन्तीश्च शरीरस्थिरतामुत्पादयेयुः, न प्रागप्यदृष्टकालां, यथा प्रक्रामन्तोऽभ्यासात् प्रक्रमाणां वृद्धेर्याश्च यावन्तीश्च मात्रां प्राप्नुवन्ति, न तु अभ्यस्यन्तः पुरुषायुषेणापि योजनमात्रं प्रक्रमेयुः एवम् इहापि सम्बन्धा-

भावात् सहस्रायुष्टं प्राप्नुयुर्नवेति सन्दिग्धं, सन्दिग्धं चेत्, सामान्यतो दृष्टं न प्रमाणं,न च अदृष्टोऽर्थः प्रमाणमन्तरेण, शक्योऽभ्युपगन्तुम् । तस्मात् असंशयं, नैतावदायुषः सन्ति इति पुरुषवचनेन उक्तम् । कथं तर्हि ? इति ।

## स कुलकल्पः स्यादिति कार्ष्णाजिनिरेकस्मिन्नसम्भवात् ॥ ३५ ॥ (३य पू०)

स, मनुष्याधिकारपक्षे कुलकल्पो भविष्यति इत्येवं कार्ष्णाजिनिः आचार्य्यो मन्यते स्म । कुतः ? । एकस्मिन् असम्भवात्, पुरुषाणाम् इदम् अनुशासनं, न च एतत् एकः शक्नोति पारयितुम्, यथा शक्यते, तथा पारयितव्यम् इति गम्यमाने, बहवः शक्नुवन्तः प्रवर्त्तेरन्, अन्येऽपि तत्कुलीना अन्येनारब्धं समापयेयुः इति ।

## अपि वा कृत्स्नसंयोगादेकस्यैव प्रयोगः स्यात् ॥ ३६ ॥(३य पू० नि०)

शास्त्रफलं हि प्रयोक्तरि समधिगतं (३ । ७ । ८ अ०), यश्च कात्स्न्र्येन विधिम् उपसंहर्त्तुं, समर्थः स एवाधिक्रियते इति । तस्मात् न कुलकल्पोऽवकल्प्यते । कथं तर्हि ? सम्प्रदायमात्रेण धर्म्मः इत्यध्यवसीयते । एवं श्रूयते, स्वाध्यायोऽध्येतव्यः इति । एवं तर्हि एतदध्यवसेयं,वचनप्रामाण्यात् एतत् कर्म्म कुर्वताम् आयुर्वर्द्धते इति । तच्च न, प्रमाणाभावात्,न हि एतस्मिन् अर्थे वाक्यम् अन्यद्वा प्रमाणमस्ति । ननु अर्थापत्तिः,अन्यथा आनर्थक्यं भविष्यति इति । उच्यते,

न आनर्थक्यम्, अध्ययनादेव हि अदृष्टं भविष्यति, तथा हि सामान्येन अदृष्टं कल्पयितुम् लघीयः न तु कर्म्मणा आयुर्वर्द्धते इति विशेषादृष्टकल्पना। अथ वा आनर्थक्यमेव अभ्युपगम्येत, न अयुक्तं फलं कल्प्यम्। अथ उच्येत, अर्द्ध-तृतीयानि शतानि दोक्षिष्यन्ते,चतुर्भिर्वर्षैः समाप्यन्ते इति। एवमपि नियतपरिमाणं हीयेत, चतुर्विंशतिपरमाः सप्त-दशावराः सत्रमासीरन् इति। वचनस्य तु आनर्थक्यपरि-हाराय परिमाणं ह्रापयिष्यते इति चेत्। तदयुक्तम्, अध्य-यनात् फलमस्ति। तस्मात् न एषा कल्पना इति। कथ-न्तर्हि ?। एवम्,

**विप्रतिषेधात्तु गुणान्यतरः स्यादिति लावुका-यनः॥ ३७ ॥ (सि० उपक्रमः १)**

अन्यतरः अत्र गौणः शब्दः स्यात्, यदि वा असंवत्सरे संवत्सरशब्दः, यदि वा पञ्चपञ्चाशतः इति शब्दो गौणः इति। कुतः एतत् ?। विप्रतिषेधात्, विप्रतिषेधो हि भवति, उभयस्मिन् विहिते। कथम् ?। वाक्यं हि भिद्येत, यदि पञ्चपञ्चाशतस्त्रिवृतः, न संवत्सराः। अथ संवत्सरा-स्त्रिवृतः, न पञ्चपञ्चाशतः। तस्मात् विरोधात् अन्यतरत् वचनं गौणम् इति लावुकायनः आचार्य्यो मन्यते स्म। आचार्य्यग्रहणं पूजार्थं, नात्मनः प्रतिषेधार्थम्।

**संवत्सरो विचालित्वात् ॥ ३८ ॥ (सि०उ०२)**

एतदुक्तम्, अन्यतरत् गौणम् इति। तदवधारयितव्यं

तदुच्यते, संवत्सरवचनं गौणम् इति। कुतः ?। विचालि-त्वात्, विचाली हि संवत्सरशब्दः सावनोऽपि गणितदि-वसकः, शीतोष्णवर्षालक्षणोऽपि, चान्द्रमसोऽपि, स एवं-लक्षणकोऽनुवादः शक्यते कल्पयितुम्। पञ्चपञ्चाशतः इत्य-यन्तु व्यक्तपरिमाणस्यार्थस्य वाचकः, एकेनाप्यूने न भवति।

## मा प्रकृतिः स्यादधिकारात् ॥ ३८ ॥ (४र्थ पृ०)

गवामयने मासाः प्रकृताः, मासेषु च संवत्सरशब्दः उक्तः, यो वै मासः संवत्सरः इति। तस्मात् पञ्चपञ्चाशतो मासाः इति। ननु एतस्मिन् पक्षे सहस्रसंवत्सरशब्दो न अवकल्पते। उच्यते, नामधेयमेतत् सहस्रसंवत्सरशब्दः इति, न गुणविधिः, नामधेयं च न विधीयते, अविधीय-मानञ्च येन केनचित् गुणेन अवकल्पयते।

नैषोऽपि पक्षो युज्यते, अत्रापि हि स एव दोषः, न तावज्जीवनमस्ति, यावतैतत् अवकल्पेत, दाराग्निकाल-सामपूर्वत्वापेक्षयेति। तेनैतस्मिंश्च क्रियमाणेऽपरिसमाप्ते एवायुः पर्य्युपयुक्तं स्यात्, तथा च अध्ययनात् एव अदृष्टं कल्पेत। एवं तर्हि, द्वादशाहः प्रकृतिरिति पञ्चपञ्चाशतो द्वादशाहा भविष्यन्ति इति, तथा च दृश्यते द्वादश वै रात्रयः संवत्सरस्य प्रतिमा इति, तत्र स दोषो न भवि-ष्यति। नैवं, तत्र संवत्सरशब्दस्य साक्षात् प्रतिमाशब्देन संयोगात् अपि च, पञ्चपञ्चाशतस्त्रिवृतः इत्युक्तं, त्रिवृच्छ-ब्दश्च द्वादशाहे दिवसे दृष्टः, न द्वादशरात्रे। तस्मात् नैवम्।

अहानि वाभिसङ्ख्यत्वात् ॥ ४० ॥ (सि॰)

वाशब्दः पक्षं व्यावर्त्तयति, न च एतदस्ति, पञ्चपञ्चाशतो द्वादशरात्राः इति, अहान्येव त्रिवृच्छब्देनाख्यायन्ते। तस्मात् अहःसु संवत्सरशब्दः इति। अथ वा, वाशब्दः पक्षान्तरं व्यावर्त्तयति, न पञ्चपञ्चाशतो मासाः, किन्तर्हि दिवसाः। द्वादशाहे त्रिवृत् अहः प्रकृतं, तत्र संवत्सरशब्दो दृश्यते, आदित्यो वा सर्व ऋतवः, स यदैवोदित्यथ वसन्तो, यदा सङ्गवोऽथ ग्रीष्मो, यदा मध्यन्दिनोऽथ वर्षा, यदाऽपराह्णोऽथ शरत्, यदाऽस्तमेत्यथ हेमन्तशिशिरौ इति सर्वान् ऋतून् अहनि सम्पादयति, सर्वे च ऋतवः संवत्सरः। तस्मात् अहः संवत्सरशब्देन उच्यते। अपि च पञ्चपञ्चाशतस्त्रिवृतः इति त्रिवृतां पञ्चपञ्चाशत्त्वं, न च द्वादशरात्रस्त्रिवृत, एकं हि द्वादशाहे त्रिवृदहः, न तत्र त्रिवृत्सङ्ख्याया द्वादशरात्रेण मुख्यया वृत्त्या सामानाधिकरण्यं, त्रिवृदहः सम्बन्धलक्षणया स्यात्, अभिसङ्ख्यं त्रिवृदहः, तेन श्रुत्यैव सामानाधिकरण्यं, श्रुतिश्च लक्षणाया ज्यायसी। तस्मात् पञ्चपञ्चाशदहानि संवत्सरः स्यात् इति। (६।७।१३अ॰)।

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठस्याध्यायस्य सप्तमः पादः।

———

## षष्ठे अध्याये अष्टमः पादः ।

अथानाहिताग्नेरेव चतुर्होतृहोमाधिकाराधिकरणम् ।

**इष्टिपूर्व्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्व्वोऽप्याधानस्य सर्व्वशेषत्वात् ॥ १ ॥**

(१म पू०)

इह चतुर्होत्राम्नायते, प्रजाकामं चतुर्होत्रा याजये-च्चतुर्गृहीतमाज्यं गृहीत्वा चतुर्होतारं व्याचक्षीत पूर्वेण ग्रहेणार्द्धं जुहुयात्, तदुत्तरेणार्द्धम् इति । तत्र सन्देहः, किं पवमानेष्टिसंस्कृतेषु अग्निषु एवमादयः, उत असंस्कृते-ष्वपि ? तथा पक्षान्तराश्रयणमपि वक्ष्यमाणं विचारयि-ष्यते । किं तावत् प्राप्तम् ? संस्कृतेषु अग्निषु एवञ्जातीयकः अक्रतुशेषो ऽपि होमः स्यात् । यद्यप्यपूर्वा दर्विहोमा न कुतश्चिद्धर्मान् आकाङ्क्षन्ति, तथापि आहवनीयादयो होमा-दीन् आकाङ्क्षन्ति, यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवति इत्येवमादिभिः श्रुतिभिः । एवमिष्टिपूर्व-त्वात् सर्वहोमानां, संस्कृताग्निवृत्तित्वम् एवञ्जातीयका-नाम् इति ।

**इष्टित्वेन तु संस्तवश्चतुर्होतृनसंस्कृतेषु दर्श-यति ॥ २ ॥ (उ०)**

तुशब्दात् पक्षो विपरिवर्त्तते। चतुर्होतृहोमाः असंस्कृतेषु अग्निषु भवेयुः। तथा हि दर्शयति, एषा वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतारः इति, अनाहिताग्नेरिष्टयो न विद्यन्ते, ये त्वेते चतुर्होतारः, तस्यैवैव इष्टिरिति, अनाहिताग्नेः एवञ्जातीयकान् दर्शयति। तस्मात् असंस्कृतेषु भवेयुः। ननु लिङ्गम् असाधकं, प्राप्तिर्वक्तव्या इति। तदुच्यते,

## उपदेशस्त्वपूर्व्वत्वात् ॥ ३ ॥ (यु०)

एवं तर्हि, अक्रतुशेषाणां विधिः एषा भविष्यति, एषा अनाहिताग्नेः क्रिया इति। एवम् अर्थवद्वचनं भविष्यति, वादमात्रम् अनर्थकं भवति, अस्य च अस्ति विधिसामर्थ्यम्। तस्मात् विधिः असंस्कृतेषु इति।

## स सर्वेषामविशेषात् ॥ ४ ॥ (२य पू०)

आह, एतत् गृह्यते विधिः इति। यत्तु, अक्रतुशेषाणाम् इति, तन्न, सर्वेषां क्रतुशेषाणाम् अक्रतुशेषाणां च चतुर्होतृहोमानाम्। कुतः ?। अविशेषात्, न क्रतुशेषाणामेव अयं धर्म्म उच्यते, न अक्रतुशेषाणाम् इति। तस्मात् सर्वेषाम्।

## अपि वा क्रत्वभावादनाहिताग्नेरशेषभूतनिर्द्देशः ॥ ५ ॥ (सि०)

अपि वा इति पक्षव्यावृत्तिः। अक्रतुशेषाणाम् एव अयं धर्म्मो न क्रतुशेषाणाम्। कुतः ?। अनाहिताग्नेः

क्रत्वभावात्, न हि अनाहिताग्नेः क्रतवः सन्ति । न च क्रत्वङ्गं केवलं प्रयुज्यमानं कस्मैचित् प्रयोजनाय स्यात् । न च अस्य अन्यत् फलं प्रकल्पेत, प्रमाणाभावात् । वचनस्य, हि अन्यदपि प्रयोजनमस्ति । न च, अनेन वचनेन शक्यतेऽनाहिताग्नेः क्रतुः कल्पयितुम् । तस्मात् अक्रतुशेषाणाम् अयं धर्मः इति ।

## जपो वानग्निसंयोगात् ॥ ६ ॥ (आ०)

वाशब्दात् पक्षो विपरिवर्त्तते । न असंस्कृतेषु अग्निषु एवञ्जातीयका होमाः स्युः । कुतः ? । आधानस्य सर्वशेषत्वात् । ननु वचनमिदम्, एषा अनाहिताग्नेरिष्टिः इति । न इति ब्रूमः, जपार्थवाद एष भविष्यति, ये जपरूपास्तेषाम् अर्थवादो न सर्वेषां चतुर्होतॄणाम्, एवं यदाहवनीये जुहोति इत्येवमादीनां वचनानाम् अर्थवत्ता भविष्यति ।

## इष्टित्वेन तु संस्तुते होमः स्यादनारभ्याग्निसंयोगादितरेषामवाच्यत्वात् ॥ ७ ॥ (उ०)

यदुक्तम् एषा वा अनाहिताग्नेः क्रिया इष्टितुल्या इति जपानाम् एष वादः इति, तन्न, नैषा वचनव्यक्तिः, येषा अनाहिताग्नेः क्रिया, सा इष्टितुल्या इति । किंकारणम् ? । सादृश्यामात्रानुवादोऽनर्थकः स्यात्, इतरस्मिन् पक्षे विधिः अर्थवान्, येयम् इष्टिः, एषा अनाहिताग्नेः इति, तदिष्टिसंस्तवाद्धोमानामेव वादः । कथम् ? । इष्टियोगः, स एवासेचनात्मिको होमः । यदुक्तं, सर्वहो-

मार्थं आहवनीयः इति । तत्र चतुर्होतॄनेवाधिकृत्य उच्यते, किन्तु अविशेषेण होमान्, स चतुर्होतृषु असम्भवात् अन्येषु भविष्यति, चतुर्होतृषु च अनाहिताग्नेरुच्यमानेषु आहवनीयो न अङ्गम् इति ।

## उभयोः पितृयज्ञवत् ॥ ८ ॥ (आ०)

नैतदस्ति, अनाहिताग्नेरेव चतुर्होतारः इति, उभयोः स्युः, पितृयज्ञवत्, यथा पितृयज्ञ आहिताग्नेः अनाहिताग्नेश्च, एवं चतुर्होतारोऽपि । कथम् अवगम्यते, ? । वर्णितमेतत्, यदा अनुवादपक्षः, तदा आहिताग्नेः, यदा विधिपक्षः, तदा अनाहिताग्नेः । उभयथा वचनव्यक्तिः प्रतीयते, न च प्रतीयमानोऽर्थः शक्यतेऽपह्नोतुम् । तस्मात् उभयोश्चतुर्होतारः इति ।

## निर्देशो वानाहिताग्नेरनारभ्याग्निसंयोगात् ॥ ९ ॥ (उ०)

न चैतदस्ति, उभयोश्चतुर्होतारो भवेयुः इति । कथम् ? । एष हि अनाहिताग्निनिर्देशः, एषा वा इष्टिः अनाहिताग्नेः इति वचनेन अधिकृतः, न आहिताग्निः, निर्देशसामर्थ्यात् । अर्थवादे च उपचीर्णं तत्रैव न विकल्प्यते इति । यदाहवनीये जुहोति इति वचनं न चतुर्होतॄनेव अधिकृत्य उच्यते इत्युक्तम् । तस्मात् अनाहिताग्नेरेवञ्जातीयका होमाः ।

## पितृयज्ञे संयुक्तस्य पुनर्वचनम् ॥ १० ॥ (आ० नि०)

अथ यदुक्तं, पितृयज्ञवत् इति, युक्तं पितृयज्ञे, तत्र आहिताग्निसंयुक्तस्य पुनरेतद्वचनं भवति, अप्यनाहिताग्निना कार्य्यः इति, एतद्वचनम् अनाहिताग्नेरपि इति अनाहिताग्नौ अन्वाहार्य्यकं करोति, इह तथा नास्ति वचनं, नियोगत एको निर्द्देशः, एषा वा अनाहिताग्नेः इति, न च अविशब्दोऽस्ति। तस्मात् पितृयज्ञेन अतुल्यमेतत्। (६।८।१ अ०)।

---

अनाहिताग्न्युपनयनहोमाधिकरणम्।

## उपनयन्नादधीत होमसंयोगात् ॥ ११ ॥ (पू०)

इदमामनन्ति, उपनयंस्तस्मिञ्जुहुयात् इति। तत्र सन्देहः, किम् अयं होम आधानसंस्कृतेषु अग्निषु, उत असंस्कृतेषु ?। इति। किं प्राप्तम् ? उपनयन्नादधीत इति। कुतः ?। होमसंयोगात् आहवनीयस्य, यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवति इति। तस्मात् आधानोत्तरकाला एवं होमाः इति स्थितिः।

## स्थपतीष्टिवल्लौकिके वा विद्याकर्मानुपूर्व्वत्वात् ॥ १२ ॥ (सि०)

न चेतदस्ति, आधाय एवञ्जातीयकं होतव्यम् इति।

किं तर्हि ? लौकिके एव प्रवर्त्तेत इति । कुतः ? । विद्या-कर्मानुपूर्वत्वात्, विद्याग्रहणार्था इमे होमाः । विद्यावतश्च आधानेन अधिकारः, सामर्थ्यात् । अतः आधानोत्तरकालता तेषाम् अवकल्पते, यथा स्थपतीष्ट्याम् ।

**आधानञ्च भार्य्यासंयुक्तम् ॥ १३ ॥ (यु०)**

आधानं च भार्य्यासंयुक्तम् श्रूयते, विद्याग्रहणोत्तरकालश्च दारसंग्रहः । तस्मात् अपि न अवकल्पते पूर्वकालता आधानस्य ।

**अकर्म चोर्द्ध्वमाधानात्तत्समवायो हि कर्मभिः ॥ १४ ॥ (आ० नि०)**

अत्र आह, या पूर्वमाधानात्, दारक्रिया, सा कर्मार्था भविष्यति, वचनाच्च ऊर्द्ध्वमाधानात् अपत्यार्था, द्वयोरपि कालयोः, पिण्डपितृयज्ञवत् नैष दोषो भविष्यति इति । अत्र उच्यते, अकर्म्म च दारक्रिया, या आधानोत्तरकाले । कुतः ? । आहवनीयादि समवायो हि कर्म्मभिः भवति, स्वार्थं च अग्नयः आधातव्याः इति नियमः । तस्मात् उभयस्मिन्नपि काले दारसंग्रहः इत्येतत् नास्ति ।

**आङ्गवदिति चेत् ॥ १५ ॥ (आ०)**

अत्र आह, यथा पिण्डपितृयज्ञः आहिताग्नेः, अनाहिताग्नेश्च भवति, एवं दारसंग्रहोऽपि इति यदुक्तं, तत्परिहर्त्तव्यम् ।

## न श्रुतिविप्रतिषेधात् ॥ १६ ॥ (आ० नि० १)

नैवम्। श्रुतिविप्रतिषेधो हि भवति, एवं क्रियमाणे दारकर्मणि विद्याग्रहणोत्तरकालं श्रूयमाणं पूर्वं क्रियते इति विप्रतिषिद्धम्। अर्थादन्यदेवेदम् इति चेत्। न अर्थप्राप्तस्यैव कालनियमः एषः। उपनयनं च कर्मार्थं, तत् द्वितीयस्यां विप्रतिषिध्येत।

## सत्रार्थत्वाच्च पुत्रार्थो न प्रयोजयेत् ॥ १७ ॥ (आ० नि० २ एवं पू०)

अथ उच्येत, प्रागाधानाच्च, कर्मार्था एव, ऊर्द्धं च अपत्यार्था एव अस्य भविष्यति, तेनैवं सति अस्य न किञ्चित् विरोत्स्यते इति। उच्यते, नैतदेवं, सर्वार्था हि सा, न केवलम् अपत्यार्थतामेष्यति, तदुक्तं, फलोत्साहाविशेषात् इति। तस्मात् अपि न द्विर्दारसंग्रहः। अपि च एवं स्मर्य्यते, धर्मे च अर्थे च कामे च नातिचरितव्या इति, एवं सति अतिचरिता स्यात्, अतो न द्विर्दारसंग्रहः। एकैव भार्य्या कर्मार्था अपत्यार्था च, तस्माच्च विद्याग्रहणोत्तरकालता। अतो न आधानसंस्कृतेषु एते होमाः इति।

## सोमपानात्तु प्रापणं द्वितीयस्य तस्मादुपयच्छेत् ॥ १८ ॥ (पू० नि०)

दृश्यते एतत्, प्रागुपनयनात्, नास्ति पत्नी इति। यदुक्तम् एकैव पत्नी इति, तत्र ब्रूमहे, यथैव स्मृतिः, धर्मे

च अर्थे च कामे च नातिचरितव्या इति, धर्मप्रजासम्पन्ने दारे न अन्यां कुर्वीत इति च । एवम् इदमपि स्मर्य्यते एव, अन्यतरापाये अन्यां कुर्वीत इति । तस्मात् यस्य न धर्म-सम्पन्ना न प्रजासम्पन्ना वा पत्नी, सोऽन्यां कुर्वीत इति । सोमपानात् इति च अर्थवादं व्यपदिशति स्म, सोमपा न द्वितीयां जायामभ्यपूयते इति द्वितीयामपि जायां दर्शयति ।

**पितृयज्ञे तु दर्शनात्प्रागाधानात्प्रतीयेत ॥ १९॥**

**(आ० नि० ३)**

अथ कथं पितृयज्ञस्य द्वौ कालौ ? इति । उच्यते, वचनं हि तत्र दृश्यते, अप्यनाहिताग्निना कार्य्यः इति । तस्मात् प्रागाधानात् पितृयज्ञः इति । ( ६ । ८ । २ अ० ) ।

---

अनाहिताग्नौ स्थपतीष्ट्यधिकरणम् ।

**स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्या-च्चापवृज्येत ॥ २० ॥ (पू०)**

अस्ति स्थपतीष्टिः, एतया निषादस्थपतिं याजयेत् इति । तत्र सन्देहः, किम् आधानसंस्कृतेषु अग्निषु स्यात्, उत लौकिकेषु ? इति । किं प्राप्तम् ? संस्कृतेषु इति । कथम् ? । यदाहवनीये जुहोति इत्येवमादिवचनात् । ननु शूद्रस्य आहवनीयाभावात् नास्ति तस्य श्रुतिः इति । उच्यते, सा हि आहवनीयं प्रयोजयेत्, यथा प्रयाजान्

अश्रुतान् प्रयोजयति, एवं चोदकसामर्थ्यात् इति। तादर्थ्याच्च अपवृज्येत, स्थपतीष्ट्यर्थं च आहिता अग्नयः,तस्याम् अपवृक्तायाम् अपवृज्येरन्, धारणं हि तेषां दृष्टकार्य्यम् आम्नातम्, अतिक्रान्ते कार्य्ये न स्यात् इति।

अपि वा लौकिकेऽग्नौ स्यादाधानस्यासर्वशेषत्वात् ॥ २१ ॥ (सि०)

अपि वा इति पक्षव्यावृत्तिः। लौकिकेषु अग्निषु स्यात् न संस्कृतेषु। कुतः ?। आधानस्यासर्वशेषत्वात्, सर्वकर्मशेषभूता अग्नयः, तदङ्गमाधानं, न कर्माङ्गम्। श्रुत्यादीनामभावात् न कर्मप्रयुक्तता आधानस्य। वाक्यसामर्थ्याच्च अग्निप्रयुक्तत्वम्। यच्च दर्शपूर्णमासप्रयुक्तं,तच्चोदकेन प्राप्यते, न द्रव्यप्रयुक्तम्। तस्मात् लौकिकेषु अग्निषु स्थपतीष्टिः इति। (६। ८। ३ अ०)।

---

अनाहिताग्नेरवकीर्णिपश्वनुष्ठानाधिकरणम्।

अवकीर्णि-पशुश्च तद्वदाधानस्याप्राप्तकालत्वात् ॥ २२ ॥

अस्ति अवकीर्णि-पशुः, ब्रह्मचार्य्यवकीर्णी नैर्ऋतं गर्दभमालभेत इति। तत्र सन्देहः,किं तदर्थम् आधानं कर्त्तव्यम्, उत लौकिकेषु अग्निषु तद्वर्त्तेत ? इति। अवकीर्णि-पशुश्च तद्वत् इत्यधिकरणातिदेशः, पूर्वस्य अधिकरणस्य यः पूर्वः पक्षः, स अत्र पूर्वः पक्षः। यः सिद्धान्तः, स सिद्धान्तः।

सर्वार्थम् आधानम्, तस्मात् आहिताग्निषु इति पूर्वः पक्षः आधानस्य अप्राप्तकालत्वात् इति सिद्धान्तः, अप्रामाण्यम् आधानस्य कालः इत्येतदुक्तम्। तस्मात् इदमपि कर्म्म लौकिकेषु इति। (६।८।४ अ०)।

---

दैवकर्म्मणामुदगयनादिकालताधिकरणम्।

उदगयनपूर्व्वपक्षाहः पुण्याहेषु दैवानि स्मृति-रूपान्यार्थदर्शनात्॥ २३॥ (सि०)

दैवानि कर्म्माणि उदाहरणम् उपनयनप्रभृतीनि। तत्र सन्देहः, किम् अनियते काले दैवानि कर्त्तव्यानि, उत उदगयन-पूर्व्वपक्षाहः-पुण्याहेषु? इति। अनियते इति प्राप्ते उदगयनादिषु इत्युच्यते। कुतः?। एवं स्मरन्ति, तेषु कालेषु दैवानि इति। रूपार्थवादश्च, एतद्वै देवानां रूपं, यत् उदगयनं, पूर्व्वपक्षोऽहः इति, न च वयं देवादीनां रूपं विद्मः। अथ त्वेषु कालेषु दैवानि क्रियन्ते, ततः एतेन सम्बन्धेन रूपवचनम् अवकल्पते। अन्यार्थं च वाक्यमेतत् दर्शयति, पूर्व्वाह्णो वै देवानां,मध्यन्दिनो मनुष्याणाम्, अपराह्णः पितॄणाम् इति। तस्मात् एतेषु कालेषु दैवानि स्युः इति।

अहनि च कर्म्मसाकल्यम्॥ २४॥ (यु०)

अहनि च विशेषः, सकलं कर्म्म अहन्येव शक्यते कर्त्तुम् इति, न रात्रौ करिष्यति। (६।८।५ अ०)।

---

पितृकर्मणोऽपरपक्षादिकालताधिकरणम् ।

इतरेषु तु पित्र्याणि ॥ २५ ॥

श्राद्धादीनि अपरपक्षे अपराह्णे च, स्मृतिरूपान्यार्थ-दर्शनात् । (६ । ८ । ६ अ०) ।

---

ज्योतिष्टोमाङ्गयाच्ञाक्रययोर्नित्यताधिकरणम् ।

याच्ञाक्रयणमविद्यमाने लोकवत् ॥ २६॥ (पू०)

इदं समाम्नायते ज्योतिष्टोमे, द्वादश रात्रीर्दीक्षितो भृतिं वन्वीत इति, तथा सोमं क्रीणाति इति । तत्र सन्देहः किं यस्य न विद्यते भृतिः, तेन वनितव्या, यस्य च न विद्यते सोमः, तेन क्रेतव्यः उत उभयथापि सति च असति च ? । किं प्राप्तम् ? याच्ञाक्रयणम् अविद्यमाने भृतिधने सोमे च स्यात् । कस्मात् ? । द्रव्यसद्भावार्थं याच्ञाक्रयणं, तत् विद्यमानेऽनर्थकम् । अनर्थकं च उक्तमपि न कर्त्त-व्यम् । तस्मात् अविद्यमाने भवेत्, लोकवत् । यथा यस्य लोके नास्ति द्रव्यं, स याचते क्रीणाति च, एवम् इहापि द्रष्टव्यम् ।

नियतं वार्थवत्त्वात् स्यात् ॥ २७ ॥ (सि०)

नियतं वा याच्ञाक्रयणं, तद्विद्यमाने अविद्यमाने च द्रव्ये स्यात्, एवं याच्ञाक्रयणम् अर्थवत् भवति, ज्योति-ष्टोमप्रयुक्तं हि तत् श्रूयते, न द्रव्यप्रयुक्तम् । तत्र नित्यं

ज्योतिष्टोमस्य। नैवं वचनं भवति, यदा द्रव्यं नास्ति तदा कर्त्तव्यम् इति। ज्योतिष्टोमस्य च नित्यमङ्गमुक्तं, द्रव्याभावो निमित्तम् उक्तम् इति परिकल्प्येत, कल्पनायां शब्दो बाध्येत। अतो याज्याक्रयणसंस्कृतम् द्रव्यम् इहोपयोक्तव्यम्, अन्यथा वैगुण्यं भवति। तस्मात् सति च असति च द्रव्ये याज्याक्रयणम् अनुष्ठातव्यम् इति। अथ यदुक्तं, लोकवत् इति, लोके कर्म्म अर्थलक्षणं भवति, न शब्दलक्षणं यथा अर्थः, तथा क्रियते। न, यथा शब्दः। वेदे तु शब्देनैव अर्थोऽवगम्यते, तथैव अनुष्ठेयम् इति। तस्मात् विद्यमानेऽपि कर्त्तव्यम्। (६। ८। ७ अ०)

—:०:—

ज्योतिष्टोमादिषु पयोव्रतादीनामपि नित्यताधिकरणम्।

## तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषम् ॥२८॥

ज्योतिष्टोमे श्रूयते, पयो व्रतं ब्राह्मणस्य यवागू-राजन्यस्य, आमिक्षा वैश्यस्य इति। तथा दर्शपूर्णमासयोः प्रैषः, प्रोक्षणीरासादयेध्मं बर्हिरुपसादय स्रुचः संमृड्ढि पत्नीं सन्नह्याज्येनोदेहि इति। तथा वाजपेये श्रूयते, दर्भमयं वासो भवति इति। पशौ संज्ञप्तहोमः, यत् पशुर्मायुमकृतोरो वा पद्भिराहत अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः इति। तथा, योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः इति वचनम्, एतानि उदाहरणवचनानि।

तेषु सन्देहः, किं यस्य अपरं भोजनं न विद्यते, स पयो व्रतयेत्, यवागूमामिक्षां वा, उत विद्यमानेऽपि ?

इति। तथा यो प्रेषितः प्रैषार्थं न प्रतिपद्यते, स प्रेषितव्यः, उत प्रतिपद्यमानोऽपि? इति। तथा, यस्य सूत्रमयं वासो नास्ति, स दर्भमयं परिदधीत, उत विद्यमानेऽपि? इति। तथा यस्य पशुर्मायुम् कुर्यात्, उरो वा पादौ वा हन्यात्, स एतेन मन्त्रेण जुहुयात्, उत अन्योऽपि? इति। तथा, यो द्वेष्टि कश्चित् अन्येन च द्विष्यते, स एव मन्त्रं ब्रूयात्, योऽस्मान् द्वेष्टि इति। उत अद्विषन् अद्विष्यमाणस्यापि? इति।

तत्र अधिकरणातिदेशोऽयम्। तत्र यः पूर्वस्मिन् अधिकरणे पूर्वः पक्षः, स इह पूर्वः पक्षः, यस्तत्र सिद्धान्तः, स इह सिद्धान्तः, अविद्यमाने कुर्य्यात् इति पूर्वः पक्षः। नियतं वार्थवत्त्वात् (६।८।२७ सू०) इत्युत्तरः। स एव अत्र न्यायः, यः पूर्वत्र। (६।८।८ अ०)।

---

अपरराते व्रतस्यानियमाधिकरणम्।

## अनर्थकं त्वनित्यं स्यात् ॥ २९ ॥

ज्योतिष्टोमे श्रूयते, मध्यन्दिनेऽपरराते वा व्रतं व्रतयति इति सन्देहः, किं नियतम् अपरराते व्रतम्, उत अनियतम्? इति। किं प्राप्तम्? नियतं च अर्थवत्त्वात् स्यात् इति। तत्र एवं प्राप्ते ब्रूमः, अनर्थकं त्वनित्यं स्यात्, यदा एवम् मन्येत, अस्मिन् काले व्रतं मे जरिष्यति इति, तदा व्रतयेत्, यदा तु खलु मन्येत, न सम्यक् जरिष्यति इति,

तदा तत् व्रतं क्रियमाणम् अनर्थकं स्यात्, यदि हि अजीर्णेन यजमानो म्रियेत, तदा तन्त्रलोपः, तन्त्रलोपे च सर्वलोपः। तस्मात् अनियतं तस्मिन् काले व्रतं व्रतयितव्यम् इति। (६।८।६ अ०)।

---

छागस्यैवाग्नीषोमीयपशुताधिकरणम्। (कृत्वाचिन्तारूपमिदम्)।

## पशुचोदनायामनियमोऽविशेषात् ॥३०॥ (पू०)

ज्योतिष्टोमे पशुरग्नीषोमीयो, यो दीक्षितो यदग्नीषोमीयं पशुमालभते इति। तत्र सन्देहः, किं यः कश्चित् पशुरालम्भनीयः, उत छागः? इति वक्ष्यमाणेन अभिप्रायेण भवति संशयः। ननु एकेषामाम्नायते, अजोऽग्नीषोमीयः इति, सर्वशाखाप्रत्ययं च एकं कर्म इति। अत्र उच्यते, प्रतिशाखं भिन्नानि कर्माणि इति कृत्वा चिन्ता। किं तावत् प्राप्तम्? पशुचोदनायाम् अनियमः उत्सर्गे कर्त्तव्ये द्रव्यं शक्यते उत्स्रष्टुम्, न पशुत्वम्। द्रव्यं हि साधकम्, अतः अत्र द्रव्यम् अन्तरेण, उत्सर्गो न सम्भवति इति द्रव्यम् उपादीयते। तस्मिन् उपादीयमाने अनियमः, यत्किञ्चित् उत्स्रष्टव्यम् इति। कुतः एतत्?। अविशेषात्, न हि पशुत्वसम्बद्धेषु कश्चिद्विशेषः उपलभ्यते। तस्मात् यः कश्चित् पशुः [illegible]।

## छागो वा मन्त्रवर्णात् ॥ ३१ ॥ (सि०)

वाशब्दः पक्षं व्यावर्त्तयति। नैतदस्ति, यत्र क्वचन

द्रव्यं पशुत्वम् उपादेयम् इति। अस्ति उत्सृष्टव्यस्य नियमकारणं मन्त्रवर्णः, अग्नये छागस्य वपाया मेदसोऽनुब्रूहि इति, छागप्रकाशनसमर्थो मन्त्रवर्णः समाम्नायते, यदि छागो न उपादेयः, ततस्तत्प्रकाशनसमर्थस्य उपादानम् अनर्थवत्, तेन अवगम्यते, छागम् अधिकृत्य उत्सर्गं विदधाति इति, मान्त्रवर्णिको द्रव्यनियमविधिः इति।

## न, चोदनाविरोधात् ॥ ३२ ॥ (आ०)

नैतदेवं, न शक्नोति मन्त्रवर्णश्चोदनायां प्रत्यर्थिन्यां द्रव्यं नियन्तुम्, यत्र हि द्रव्यस्य प्रकाशकं न श्रूयते, तत्र अप्रकाशितमेव तत्कर्त्तव्यम् इति। तस्मात् न मन्त्रवर्णात् प्रकाश्यनियमविधिः कल्प्यते, एवमत्र प्रकाश्यं प्रकाशयितव्यम् इति। अत्र पुनः शब्देन अवगम्यते, पशुत्वेन प्रकाशयितव्यम् इति। तस्मात् न मन्त्रवर्णः तत्सद्भावे समर्थः। मन्त्रवर्णाद्धि कल्प्या प्रयोगवचनश्रुतिः, इह क्लृप्ता प्रयोगवचनेन उपसंहर्त्तव्या, अन्य एव पशुशब्दस्य अर्थः पशुत्वम्, अन्यो मन्त्रवर्णेन नियम्यते छागः। तस्मात् न मन्त्रवर्णश्चोदनाविरोधेन नियन्तुमर्हति इति।

## आर्षेयवदिति चेत् ॥ ३३ ॥ (आ० नि०)

इति चेत् पश्यसि, न पशुत्वम् अन्येभ्यः पशुभ्य आच्छेत्तव्यम् इति। यथा, आर्षेयं वृणीते, त्रीन् वृणीते इति। सामान्यश्रुतिः त्रिष्वेवावतिष्ठते इति, त्रित्वं विशेषो विवक्षितो न अन्ये विवक्षिताः इति। एवम् इहापि पशुत्वं, छागं प्रकल्पयितुम् विवक्षितं, न अन्यान् विशेषान् इति।

न, तत्र ह्यचोदितत्वात् ॥ ३४ ॥ (आ॰)

नैतदेवं, तत्र हि अचोदितं द्रव्यम् उत्स्रष्टव्यं, मन्त्र वर्णे, वरणे पुनश्चोदितम् तत्र त्रित्वसङ्ख्यासम्बन्धस्य वरणे चोदितत्वात्, न अन्या सङ्ख्या क्रियते। आर्षेयशब्दा-दपि न अनार्षेयं, विशब्दस्य हि तत् सामर्थ्यं, येन आर्षेयशब्दो विशिष्टसङ्ख्याविषयो नियम्यते, इह न मन्त्रस्य सामर्थ्यम्। तस्मात् अनियमः इति।

नियमो वैकार्थ्यं ह्यर्थभेदाद्भेदः पृथक्त्वेनाभि-धानात् ॥ २५ ॥ (आ॰ नि॰)

नियमो वा, ऐकार्थ्यं हि पशुच्छागशब्दयोः, सामान्यं पशुः इति, छागादयो विशेषा उच्यन्ते। कथम् ?-। तैः सा-मानाधिकरण्यात्, पशुः छागः, पशुरुष्ट्रः, पशुर्मेषः पशुरश्वः इति। एवं सति न मन्त्रवर्णः पशुशब्देन विरुध्यते तेन, छा-गोऽप्यालब्धव्यश्चोदितः, मन्त्रवर्णे उपादीयमाने इदम् अव-गम्यते, छागं विवक्षित्वा अयं पशुशब्दः उच्चरितः इति, न अन्यान् विशेषान् इति। छागोपकरणम् अस्य उपदंशितं, यदुपदंशने पशुशब्दश्छागाभिप्रायः इति गम्यते, यथा युग-वरत्रे उपदंशिते, ईषाचक्रादिसन्निधाने चेत् अश्वमानयेति उच्यते, तदा यानाश्वमधिकृत्य ब्रूते इति गम्यते, न तु विदेवनाश्वम् इति। यदि हि अर्थभेदो भवेत् पशुच्छाग-शब्दयोः, पृथक्त्वेनाभिधानं, ततो भेदः स्यात्, न छाग एव नियम्येत, अविहितः छागार्थः इति अश्वोपादानम्।

अपि च, छागपक्षे तं मन्त्रवर्णः प्रकाशयेत् । छागार्थाभिधाने पुनः पशुशब्दस्य, छागप्राप्तावन्येषाम् अप्राप्तिरिति अन्यस्मिन् प्राप्ते लिङ्गेन नियमः क्रियते इति ।

## अनियमो वार्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदाभ्याम् ॥ ३६ ॥ (आ०)

अनियमो वा, यः कश्चित् पशुः उपादेयः, अर्थान्तरत्वात्, अर्थान्तरं पशुत्वम्, अर्थान्तरं छागत्वम्, अर्थयोश्च सामानाधिकरण्यं, न शब्दयोः । कथं पुनरर्थान्तरं गम्यते ? । व्यतिरेकाच्छब्दभेदाच, व्यतिरेको हि भवति, कश्चित् पशुर्न छागः । तथा, छागः पशुः इति शब्दभेदः । शब्दभेदादेवार्थभेदो न्याय्यः । एकस्मिन् वाक्ये समवायात्, पशुं छागमानय इति, इतरथा, अन्यतरेण कृतार्थत्वात् अन्यतरो वाक्ये न समवेयात्, समवैति च । तस्मात् अन्यत् पशुत्वम्, अन्यत् छागत्वम् । तस्मात् अनियमः, यः कश्चित् पशुः उपादेयः इति ।

तयोस्सूचिका पञ्चव्याहृत्तिः, अन्यत्वेऽपि सति नियम एव । कुतः ? । मन्त्रस्य प्रयोगवचनेन गृहीतत्वात्, मन्त्रसाधनं हि कर्म [illegible]त गम्यते, यदि छागम् उपादास्यामहे, सगुणं कर्म सच्याम: कर्त्तुम्, मन्त्रम् उपाददामाः, मन्त्रस्य अपार्थकत्वात् । अथ अन्यम् उपादास्यामहे, मन्त्रस्य विषयाभावात् मन्त्रम् अपजहतो न सगुणं कर्म निर्वर्त्तयेम, अतो न च श्रुतिं बाधामहे, अन्यस्मिन् पशुशब्दो

वर्त्तते, इति न च अन्यम् उपादास्यामहे, वैगुण्यादिभ्यतः। तस्मात् छागः एव उपादातव्यः इति।

अनु अश्वम् उपाददाना नैव मन्त्रवर्णम् अपहास्यामः, स एव अश्वः छागो भविष्यति, यश्छिन्नगमनोऽश्वः, स छागः, छिदेर्गमेश्च छागशब्दः प्रसिद्धः।

रूपाल्लिङ्गाच्च ॥ ३७ ॥ (आ०)

क्वचित् मुष्करा भविष्यन्ति इति श्रूयते, शब्दान्तरेण वचनम्, अमुष्करास्तदेदम् उपपद्यते। तस्मात् छिन्नगमनोऽश्वोऽपि छागः इति कर्माख्या भविष्यति। अत्र उच्यते,

छागे न कर्म्माख्या रूपलिङ्गाभ्याम् ॥ ३८ ॥

(आ० नि०)

छागे कर्माख्या रूपलिङ्गाभ्यां न अवकल्पते, न हि छागशब्दः छिन्नगमनवचनः, समुदायो हि असौ पृथक् अर्थान्तरे प्रसिद्धो, न असौ अवयवप्रसिद्ध्या बाधितव्यः। तस्मात् न अश्वः छागः।

रूपान्यत्वान्न जातिशब्दः स्यात् ॥ ३९ ॥

(आ० नि० १)

इदम् अन्यपदोत्तरं सूत्रम्। अथ कस्मात् न वयोवचनो भवति? वयोवचना ह्येते शब्दाः छागच्छागलो वस्तः इति, तेन अश्वोऽपि वयोवचनो भविष्यति इति। उच्यते, नैतदेवं, सत्यं वयोवचनः, प्रजापतिगतस्तु वयो

वदितुम् शक्नोति यथा शोणः इति वर्णवचनः अश्वजातिगतं वर्णं वदति, न अन्यम् । तस्मात् रूपान्यत्वात् न वर्णमात्रवचनः, किन्तु जातिशब्दः स्यात्, जात्याश्रयं वर्णं वदेत् । अतश्छाग एव निगम्यते ।

**विकारो नोत्पत्तिकत्वात् ॥ ४० ॥ (आ० नि० २)**

इदमपि पदोत्तरम्, इह अश्वादीनां विकारश्छागशब्दः, किञ्चिदत्र अश्वादीनाम् उच्चार्य्यते, न किञ्चित् अन्यदेव । तस्मात् अश्वोऽपि छागः इति, न उत्पत्तिकत्वात्, औत्पत्तिको हि नामिनाम्नोः सम्बन्धः इत्युक्तम् (१।१।३ सू०), न आख्याविकारः सम्भवति इति तस्मात् न अश्वश्छागः, अतः छाग एव उपादातव्यः इति

**स नैमित्तिकः पशोर्गुणस्याचोदितत्वात् ॥४१॥ (आ० नि० ३)**

पदोत्तरमेव इदं सूत्रम् । अथ कस्मात् न छिद्रनिमित्तः छागशब्दो भवति ? एवं श्रूयते, शुषिरो वा एतर्हि पशुः यर्हि वपामुत्खिदन्ति इति । न इत्युच्यते, छिद्रत्वस्य गुणस्य पशोः अचोदितत्वात् । अव्यङ्गं पशुमालभेत इति हि चोद्यते । तस्मात् अच्छिद्रः पशुः । न च, अवयवप्रसिद्धा समुदायप्रसिद्धिर्बाध्यते, इत्युक्तमेव । तस्मात् छाग एव उपादेयो न अश्वादयः इति ।

**जातेर्वा तत्प्रायवचनार्थवत्त्वाभ्याम् ॥ ४३॥ (सि०)**

वाशब्दः अवधारणायाम् । यस्मात् अवयवप्रसिद्धा समु-

दायप्रसिद्धिर्न बाध्यते, तस्मात् जातिः एव छागशब्दो वाचकः, एवं समुदायस्य अर्थवत्ता अनुगृहीता भविष्यति इति तत्-प्रायवचनम् उपपद्यते, विश्वेषां देवानाम् उस्राणां छागानां मेषाणां वपानां मेदसोऽनुब्रूहि इति जातिप्राये वचनम् उपपद्यते। प्रायेणापि हि नियमः क्रियते, यथा, अश्वप्राये लिखितं दृष्ट्वा अश्वोऽयम् इति बुद्धिर्भवति। तस्मात् छाग एव उपादातव्यः इति। क्रत्वा-चिन्तायां प्रयोजनं न वक्तव्यम्।

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये षष्ठस्याध्या यस्य अष्टमः पादः। अध्यायश्च समाप्तः।

समाप्तश्च पूर्वः षट्कः।

---